KĀVYAMĀLĀ. 33.



THE

# ŚRINIVĀSAVILĀSA CHAMPŪ

OF

## VENKATES'A KAVI.

**With the commentary of Dharaṇîdhara.**

---

EDITED

BY

MAHĀMAHOPĀDHYĀYA PAṆDIT DURGĀPRASĀDA

AND

KĀS'ĪNĀTH PĀṆDURANG PARAB.

---

**Third Revised Edition.**

---


PUBLISHED

BY

PĀNDURANG JĀWAJĪ,

PROPRIETOR OF THE 'NIRṆAYA SÂGAR' PRESS,

BOMBAY.

---

1933.

---

*Price* [illegible]*as.*

काव्यमाला. ३३.

वेङ्कटेशकविविरचिता

# श्रीनिवासविलासचम्पूः ।

धरणीधरकृतया टीकया समेता ।

जयपुरमहाराजाश्रितेन पण्डितव्रजलालसूनुना महामहोपाध्याय
पण्डितदुर्गाप्रसादेन, मुम्बापुरवासिना परबोपाह्व-
पाण्डुरङ्गात्मजकाशीनाथशर्मणा च
संशोधिता ।

तृतीयावृत्तिः ।

सा च
मुम्बय्यां
पाण्डुरङ्ग जावजी
इत्येतैः स्वीये निर्णयसागराख्ययन्त्रालये मुद्रयित्वा प्राकाश्यं नीता ।

शाकः १८५५, सन १९३३.

मूल्यं [illegible]

# काव्यमाला ।

श्रीवेङ्कटेशकविप्रणीता

## श्रीनिवासविलासचम्पूः ।

श्रीधरणीधरकृतटीकया समेता ।

### पूर्वभागः ।

प्रथमोच्छ्वासः ।

वंशस्ते मुरली तदस्तु भण भो गोत्रं फणीन्द्राचलो
मातहं जगतां त्रयस्य सविता वामेतरा दृङ्मम ।
कास्ते ते शरणं त्वमेव सुमुखीत्येवं हि पद्मावतीं
वाचा संमदयञ्जयत्यनुकलं श्रीश्रीनिवासो हरिः ॥ १ ॥

भवसिन्धुपारगमने कवितामार्गप्रकाशनेऽपि मम ।
मानवमृगराजगुरोः सेवोडुपतरणिसरणिमावहतु ॥ २ ॥

---

श्रीः ॥ **वंशस्त इति** । वंशादयः पञ्च कुलाद्यर्थका इति प्रश्नपक्षे । वेण्वाद्यर्थका इत्युत्तरपक्ष इति कश्चिच्चमत्कारः । तथा ह्यर्थः—'द्वौ वंशौ कुलमस्करौ' इत्यमरः । गोत्रं नाम पर्वतश्च । 'गोत्रं क्षेत्रेऽन्वये छत्रे संभाव्ये बोधवर्त्मनोः । वने नाम्नि च गोत्रोऽद्रौ गोत्रा भुवि गवां गणे ॥' इति हैमः । माता सवित्री मापनकर्ता च । 'जनकः सविता पिता' इति धनंजयः । सविता रविरित्यर्थः । 'शरणं गृहरक्षित्रोः' इत्यमरः । सूर्यचन्द्रलोचनो हरिरिति कविसमयः । पद्मावती काचन राजपुत्री ॥ १ ॥ **भवेति** । 'उडुपश्चन्द्रमेलयोः' इति धरणिः । 'मेलः प्लवः' इति सुधा । तरणिर्नौः । पक्षेऽर्कः । 'तरणिस्तरणेऽर्केऽशौ कुमार्यौषधिनौ-

कविता भुवि तावदेव वन्ध्या भविता यावदयं न वर्ण्यते हि।
तरसा सुरसालवद्वदान्यः सरलालापवशंवदो मुकुन्दः॥ ३॥
उग्रोऽप्यसत्कृतार्यः कीर्तिविहीनोऽपि पङ्कयुक्तो यः।
मन्दोऽप्यशनिकठोरो दुर्जनसंघस्तनोतु मयि करुणाम्॥ ४॥
रसमयजनतोल्लसितं मध्येसभमत्र शब्दजालं मे।
सद्गुणसंपद्दर्शकमथ भूयाद्वृत्तशास्त्रवत्सततम्॥ ५॥

विजयी भवतु। यस्तु स्वस्यैव चरणवत्कमलोल्लासं दधानः। जङ्घावच्छरधिगम्भीरः। उदरवद्वलिविभङ्गशाली। नाभिवदात्मभूजननिदानपद्मोपगूढः। भुजवत्सद्वृत्तशोभितः। करवत्सच्चक्रनन्दकः। वक्षःस्थलवत्कान्तया श्रियोल्लसितः। कण्ठवत्सन्मालालंकृतः। मुखवत्कलानिधि-

---

कयोः' इति हैमः॥ २॥ **कवितेति**। सुरसालः कल्पवृक्षः। वदान्यो दानशौण्डः। वशंवदः स्वाधीनः॥ ३॥ **उग्रोऽपीति**। अत्र विरोधस्त्वर्थतः। उग्रः शिवः। आर्या दाक्षायणीति विरोधः। क्रूरः। वर्याः इति परिहारः। एवमग्रेऽपि। 'कीर्तिः पङ्के यशस्यपि' इति विश्वः। 'पङ्कोऽस्त्री कर्दमे पापे' इति हैमः। मन्दः शनिः। अशनिः शनिभिन्नः। पक्षे निर्भाग्यः दम्भोलिरिति। 'मन्दोऽतीक्ष्णे च मूर्खे च स्वैरे चाभाग्यरोगिणोः। अल्पे च त्रिषु पुंसि स्याद्धस्तिजात्यन्तरे शनौ॥' इति सुधा॥ ४॥ **रसमयेति**। रसमयी च सा जनता च रसमयजनता। पक्षे रगणादि तगणान्ताः सप्तगणाः। मध्येसभं सभामध्ये। पक्षे भगणेन सहितम्॥ ५॥ **विजयी भवत्विति**। स्वस्येति सर्वत्र संबध्यते। कमला रमा क्लीबे पद्मं च। एवमग्रेऽपि। 'कमलं सलिले ताम्रे जलजे व्योम्नि भूषणे। मृगभेदे तु कमलः कमला श्रीवरस्त्रियोः॥' इति सुधा। शरधिर्जलधिस्तूणीरश्च। 'बलिस्त्रिवलिदैत्ययोः' इति जगद्धरः। 'भङ्गस्तरङ्गभेदे च रुग्विशेषे पराजये। कौटिल्ये भयविच्छित्त्योः' इति हैमः। आत्मभूर्मदनो ब्रह्मा च। पद्मा रमा कमलं च पद्मम्। 'वृत्तं पद्ये चरित्रे त्रिष्वतीते दृढनिस्तले' इत्यमरः। 'वर्तुलं निस्तलं वृत्तं' इति च। 'चक्रः कोके पुमान्क्लीबं व्रजे सैन्यरथाङ्गयोः। राष्ट्रे दन्तान्तरे कुम्भकारोपकरणास्त्रयोः॥ जलावर्तेऽपि' इति मेदिनी। 'नन्दको

ख्यातियुतः । अधरवद्रक्तरक्तः । दन्तवन्मुक्तावलीहृदयंगमः । नयनवद्रक्तनीलः । ललाटवत्सतिलकः । कुन्तलवच्छयामाधिकरुचिः । अवतंसवत्कलापमयः । श्रीश्रीनिवासो नाम वसुधाधिपः ।

किं च, यश्चरणश्लाघ्यं भुजं ललितांसश्रियं वक्षःस्थलीं सर्वतोमुखजातशोभान्वितं पादं च वहति ।

अपि च, यः पादे प्रेमास्पदं चक्षुः नितम्बे कल्याणगुणान्वितं नेत्रं वक्षसि विपुलनयनाभियोगं च धत्ते ।

---

हरिखड्गे च हर्षके' इति सुधा । मनोहरया संपदा भार्यया रमया च । 'श्रीर्वेषरचनाशोभासंपत्सरलशाखिषु । वाणीलक्ष्मीलवङ्गेषु विषे बिल्वेऽपि' इति रत्नमाला । कलानिधिर्विद्वांश्चन्द्रश्च । 'कलनाविद्ययोः (?) शिल्पे कालभेदांशमात्रयोः । चन्द्रस्य षोडशे भागे मूलबद्धावलौ स्त्रियाम् ॥ कला च' इति लिङ्गाभट्टः । अनुरक्तेष्वनुरक्तः अतिशोणश्च । मुक्ता असंसारिणो मौक्तिकानि च । रक्ता अनुरक्ता नीला देवी यस्य सः, शोणकृष्णश्च । 'नेत्रे पुनर्यद्यपि रक्तनीले' इति भवभूतिः । 'रक्तोऽनुरक्ते नील्यादिरञ्जिते लोहिते त्रिषु' इति सुधा । तिलकश्चित्रके वृक्षविशेषे च प्रभावपि' इति रत्नमाला । अप्रसूताङ्गनाधिकस्पृहः नीलवर्णेनाधिककान्तिश्च । 'पुंस्युत्तंसावतंसौ द्वौ कर्णपूरे च शेखरे' इत्यमरः । 'कलापो भूषणे बर्हे' इति च । 'तादात्म्यार्थे विकारार्थे प्राचुर्यार्थे मयट् त्रिधा' इति तत्त्वप्रकाशिका । सर्वत्र यथोचितं लिङ्गव्यत्ययः । 'मानवा मौलितो वर्ण्या देवाश्चरणतः पुनः' इति कविकल्पलता । **किं चेति** । चरणवत्पादवच्छ्लाघ्यमिति चमत्कारार्थः । तत्त्वार्थपक्षे तु चेति च्छेदः । रणो युद्धम् । एवमग्रेऽपि । अंसश्रियम् । पक्षे ललितां सश्रियमिति च च्छेदः । मनोज्ञां सलक्ष्मीमित्यर्थः । सर्वतः सर्वत्र मुखवज्जाता उत्पन्ना या शोभा । पक्षे सर्वतोमुखजातं नीरजम् । **अपि चेति** । प्रेमास्पदं नेत्रमिति चमत्कारार्थः । जलास्पदं गङ्गेति तत्त्वार्थः । 'सीता चालकनन्दा च चक्षुर्भद्रेति गङ्गानामभेदः' इति श्रीभागवतम् । एवमग्रेऽपि । अत्र नेत्रवाचकबहुशब्दलाभः । 'तरुमूलाक्षिवस्त्रेषु नेत्रं' इति जगद्धरः । विपुलनयना स्त्री । 'परित्यक्तवामलोचनः' इति कादम्बरी । 'कथंचित्पश्यन्तः कमलनयनामात्रं' इति पुंभावसरस्वती । 'कल्याणं हेम्नि मङ्गले' इति

अपि च, अथोदरशोभां च कण्ठे कंधरोल्लसितत्वं केशेषु कुन्तलसत्स्थितिं पाणौ सदाशयाभिरामत्वं सर्वाङ्गे च धारयति ।

यं चाङ्गदोल्लसितं सङ्गरचितशोभान्वितसूर्यसुतं रामं रामानुजं चाहुः ।

येन च शरेणेव बहुविदारणक्षमेण सुकविकाव्यबन्धेनेवापरुक्षरमैत्रीभाजा महावराहेणेव महीभुजाश्लेषरसज्ञेन मुमुदे प्रजा ।

यस्मै च माधवाय ललितलताङ्गीकरणयोग्याय उत्कलिकाभिरामा सज्जालकोल्लसिता अनेककोषस्थितिरमणीयायोजना लतातितिरिव रुक्मि-

---

सुधा । अपि चाथोदरेति । अथेति च्छेदः । उदरस्य शोभां कण्ठे कण्ठवदुल्लसितत्वं केशेषु केशवत्समीचीनस्थितिं करे कराभिरामत्वमङ्ग इति चमत्कारः । तत्त्वार्थः—अथो इति च्छेदः । दरः शङ्खः । कंधरो मेघः । कमुदकम् । अव्ययमेतत् । कुन्त आयुधभेदः । आशयो मनः । 'कं शिरोऽम्बुनोः' इत्यव्ययवर्गामरः । 'पञ्चशाखः शयः पाणिः' इत्यमरः । 'अथो अथ' इत्यमरः । 'आशयो मानसाधारयोरपि' इति कोषः । यं चेति । अङ्गदस्तारेयः । सङ्गरो युद्धम् । चिता प्रसिद्धा । सूर्यसुतः सुग्रीवः । पक्षे अमिति च्छेदः । विष्णुमित्यर्थः । 'अकारो ब्रह्मविष्ण्वीशकमठेष्वङ्गणे रणे' इत्येकाक्षरकोषः । 'अ इति ब्रह्म' इति श्रुतिः । 'अक्षराणामकारोऽस्मि' इति गीता । 'अक्षरः सर्ववागात्मा परब्रह्माभिधायकः' इति श्रीभाष्यम् । गदा कौमोदकी । सङ्गः समागमः । सुरतमिति यावत् । सूर्यसुता कालिन्द्याख्या कृष्णपत्नी । येनेति । बहुविदेति रणक्षमेणेति पदद्वयम् । पक्षे एकमेव पदम् । एवमग्रेऽपि । बहुविदा बहुज्ञेन । पक्षे विदारणं भेदनम् । अपरुषा अपगतरोषेण । नाशरहितमित्रत्वभाजा । पक्षे अक्रूरवर्णघटनाभाजा । महीभुजा राज्ञा । द्व्यर्थरसज्ञेन । पक्षे भूदेवीबाह्वालिङ्गनस्वादाभिज्ञेन । यस्मै चेति । माधवो मधुकुलोत्पन्नो रमापतिर्वा । लताङ्गी वनिता । करणं नागादिबन्धः । उत्कलिका उत्कण्ठा । सज्जेति अलकोल्लसितेति पदद्वयम् । अनेककेति च्छेदः । नैकेत्यर्थः । उषःस्थितिरमणीया योजना प्रातःकालस्य या स्थितिः सद्भावः । उषःकाल एवेति यावत् । रमणीयमायोजनं सुरतं यस्याः सा । अनेन पद्मिनीत्वमुक्तम् । उषसि सुरतप्रिया पद्मिनीति कामशास्त्रम् ।

ण्यादिमहिषीजनता न केवलं स्पृहयांबभूव, किं तु लसत्पीनपयोधरचक्ररुचये प्रद्युम्नोद्धवानुकूलाय अक्रूरभानुमुखोल्लसिताय तिरस्कृतकुजन्मने गजमल्लदर्शितविक्रमक्रमाय तथाविधो गोपबालाजनश्च ।

यस्माच्च बहुलयादवसंततिर्दवसंततिर्बहुलया चाभूत् ।

यस्य चाद्भुतकरश्रियं सदाशयो बहु मेने । श्रवांसि श्रुतयो गायन्ति । चेतोवृत्तिं सुमनस्ततयोऽभिनन्दन्ति ।

यस्य चामीकरोज्ज्वला भूषा गजाश्च । चापापकारिणी भ्रूलता मनोवृ-

---

'चक्रे त्रैविक्रमाभिधं करणम्' इति ताराशशाङ्के । स्पृहायोगे चतुर्थीति । पक्षे माधवो वसन्तः । लतानामङ्गीकरणमङ्गीकारः । उत्कृष्टकोरकः समीचीनकोरकः । कोषः कोरकः । आयोजनं संबन्धः । 'क्षारको जालकं क्लीबे कलिका कोरकः पुमान्' इत्यमरः । अत्र कोरकवाचकबहुशब्दलाभः । 'सुरतं क्रीडा निधुवनमायोजनमाहुरर्थविदः' इति हारावली । 'कोशः कोषः' इति द्विरूपः । 'कोषविशदौ' इति गदसिंहोष्मविवेकः । 'कोषः खड्गपिधाने स्यात्कुड्मलेऽर्थौघदिव्ययोः' इति शान्ते षान्ते च लिङ्गाभट्टः । 'ग्रामता जनता' इत्याद्यमरः । **किं त्विति ।** लसत्सजलमेघकदम्बकान्तये । पक्षे स्फुरत्पीनकुचचक्रवाककान्तिः । इति विभक्तिव्यत्यासः । एवमग्रेऽपि । प्रद्युम्नः उद्धवः अक्रूरो भानुश्च यादवभेदः । पक्षे प्रद्युम्नोद्भवो मदनोत्सवः । अक्रूरभानुमुखं चन्द्रवदनम् । 'मुखशब्द आद्यर्थकः' इति सुधा । हतनरकासुराय । पक्षे तिरस्कृतकुत्सितोत्पत्तिः । गजः कुवलयापीडः । मल्लश्चाणूरः । विक्रमः पराक्रमः । क्रमो रीतिः । पक्षे गजश्रेष्ठवद्दर्शितपादविक्षेपरीतिः । 'उद्धवस्तु स्यान्महे कृष्णमन्त्रिणि' इति रत्नमाला । 'मुखं वदने मुख्ये ताम्रे छद्मनि' इति भागुरिः । **यस्मादिति ।** दवसंततिर्बहुलया । कदाचित्कृष्णो दावानलं पपाविति पुराणम् । पक्षे बहुला च सा यादवसंततिश्च । **यस्य चेति ।** करः शयश्च । श्रवः श्रुतिश्च । चेतो मनश्चेत्येकार्थशब्दलाभात्कश्चिच्चमत्कारः । तत्त्वार्थस्तु—अद्भुतकरी विस्मयकरी श्रीः संपत् । सदाशयः समीचीनमनाः । श्रवांसि यशांसि श्रुतयो वेदाः । सुमनस्ततयो देवसमूहाः । **यस्य चामीकरेति ।** चामीकरं स्वर्णम् । पक्षे चेति च्छेदः । अमी प्रसिद्धाः । करः शुण्डा-

त्तिश्च। चामरश्रीविराजिता कीर्तिः प्रजा च। चातुर्यान्विता द्विजाः शत्रवश्च। चमत्कृतिज्ञा मन्त्रिणः कवयश्च। चारुतोल्लसिताः स्वस्त्रीक्रीडाः परस्त्रीक्रीडाश्च। चतुरङ्गलीलान्विताः कचित्कालक्षेपा रथाश्च। चराधिकोल्लसितं वार्तानिवेदनं चेतश्च। चाराधिकोल्लसितं मण्डलेश्वरकदम्बं चक्रं च। चापक्रीडा युधि यमुनायां च। चरणोत्पन्ना गङ्गा कीर्तिश्च। चपलालसमाना स्त्रीकटाक्षततिः शत्रुश्रेणी च। चेलाकर्षणतत्पराः स्त्रीणां कामिनो वर्षासु कर्षकाश्च। चकोरकानन्ददायी मुखचन्द्रः कुचश्च वनितानाम्। चपेटिका शत्रुमुखे चर्या च गुणानाम्। चेतःप्रसादरम्यः सर्वोऽपि जनः कटाक्षश्च।

यस्य स्मरविद्वेषी सुन्दरभावः प्रतापश्च। स्मरणश्लाघ्या द्विजा वीराश्च।

---

दण्डः। एवमग्रेऽपि चेति च्छेदो ज्ञातव्यः। चापस्यापकारिणी समाना। 'बन्धुश्चोरः सुहृद्वादी प्रख्यः कल्पः प्रभः समः। देशीयदेश्यरिप्वाभसोदराद्या इवार्थकाः॥' इति कल्पलता। पक्षे पापकारिणी नेत्यपापकारिणी। अमराणां श्रीरिव श्रीस्तया विराजिता। आतुर्यमातुरत्वम्। मत्कृतिर्मद्ग्रन्थः। चारुता चारुत्वम्। पक्षे रुतोल्लसिता नेत्यरुतोल्लसिता। रुतं ध्वनिः। यद्यपि 'तिरश्चां वाशितं रुतम्' इत्यमरः। तथापि विशेषशब्दः सामान्यपरः। चतुरङ्गमिति लीलाभेदः। चरा वार्तावेदकाः। पक्षे राधिका। चारा वार्तावेदकाः। पक्षे अराश्चक्रधाराः। चक्रं सुदर्शनम्। चापो धनुः। अपां समूह आपम्। चरणः पादः। पक्षे रणो युद्धम्। चपलेति समानेति च्छेदः। 'लसमाननवांशुकः' इति माघः। पक्षे पलालं तृणभेदः। 'कृषेरिव पलालकुलम्' इति पण्डितमणिः। चेलं वस्त्रम्। पक्षे इला भूः। चकोरः पक्षिभेदः। 'सुधाबद्धग्रासैरुपवनचकोरैरनुसृतां' इति कुवलयानन्दे। पक्षे कोरकः कोशः। चपेटिका 'चफराक' इति महाराष्ट्राः। पक्षे चर्याकर्त्री गुणानां पेटिकेति योजना। चेतो मनः। पक्षे इतः। मयीति यावत्। **यस्य स्मरेति।** स्मरविद्वेषी मदनशासनः। पक्षे स्मेति च्छेदः। रविसमानः। एवमग्रेऽपि स्मेति च्छेदो ज्ञेयः। स्मरणं स्मृतिः। पक्षे रणः। मनोज्ञा मनोहरा वनिताजनता स्त्री-

स्मरतिमनोज्ञा वनिताजनता वियोगे भर्तारं सौन्दर्येण च । स्मरोचिताकाराः पुरुषाः स्त्रियश्च । स्मार्ता आचाराः शत्रवश्च ।

किं च, स्मरचितव्यथो वियुक्तस्त्रीजनः न मित्रजनः । स्मयशोभाधरो भटवर्गो न शत्रुवर्गः ।

यस्य च राष्ट्रे हरणोद्योगभ्रष्टाश्चोरा रिपुवीराश्च । हरागहृद्या चन्दनलिप्तकुचयुगी अधरपुटी च स्त्रीणाम् । हारावगुण्ठितकण्ठाः सुहृदः शत्रवश्च । हेलासक्ताः कामिनः कर्षकाश्च ।

यस्य तुरङ्गस्थानेऽश्वा वेश्याश्च नटन्ति । त्वरान्वितमश्वचक्रं चक्रं च । त्वचारुचितशोभं मृगकदम्बं शत्रुवृन्दं च । त्वङ्गदभङ्गशोभान्वितौ मित्रभुजः शत्रुभुजश्च ।

यस्य चरविहितशोभमप्यरविहितशोभं चक्रम् ।

---

समूहः वियोगकाले भर्तारं स्मरति । 'विदेहतनयां भूयः स्मरन्' इति भानुदत्तः । पक्षे वनिताजनता सौन्दर्येण रतिमनोज्ञा सुरतहृद्येति योजना । स्मरवदुचितो योग्य आकार आकृतिर्येषां ते । पक्षे रोचितः प्रकाशितः । 'रोचिताशान्तराला' इति पदलसन्माला । स्मार्ताः स्मृत्युक्ताः । पक्षे आर्ताः । स्मरेण चिता संबद्धा व्यथा यस्य । पक्षे रचितव्यथो नेत्यर्थः । स्मयो गर्वः शोभा च तयोर्धरो धारकः । पक्षे यशश्च भा च तयोर्धरो नेत्यर्थः । **यस्य च राष्ट्र इति** । हरणमपहरणम् । पक्षे हेति च्छेदः । रणः । हरस्यागः पर्वतः । 'मा द्वितीयेऽपि गौराङ्गि स्तने रचय चन्दनम् । पश्येम मिलितावेतौ हेमाचलहिमाचलौ ॥' इति प्राञ्चः । पक्षे रागः शोणिमा । हारेणावगुण्ठितो वेष्टितः कण्ठो येषाम् । पक्षे आरावो ध्वनिः । दुःखेनेति शेषः । 'हेलालीलेत्यमी हावाः' इत्यमरः । पक्षे इला । **यस्य तुरङ्गेति** । तुरङ्गस्थानं मन्दुरा । पक्षे त्विति च्छेदः । रङ्गस्थानं नाट्यस्थानम् । एवमग्रेऽपि । त्वरा वेगः । पक्षे अराश्चक्रधाराः । त्वचा चर्मणा । पक्षे चारु च तच्चितशोभं च । पश्चाद्द्वन्द्वसमासः । त्वङ्गदभङ्गशोभा स्फुरदभङ्गुरशोभा । पक्षे अङ्गदं बाहुभूषणम् । **यस्य च रवीति** । रविः सूर्यः । हिता सदृशी । अरा चक्रधारा ।

किं च, गानं तानि । सदो वितानि । मण्डलान्यवितानि । हारि विहारि अविहारि च स्तनमण्डलं स्त्रीणाम् ।

यस्मिञ्शासति वसुमतीं गिरिविभ्रमा गजा इव द्विजाः समदा द्विजा इव गजाश्च । सुप्रतीकस्पृहणीयाः करिण्य इव तरुण्यः सार्वभौमयोग्यास्तरुण्य इव करिण्यश्च । कलमहिता वाणीव केदारश्रेणी बहुधान्यहृद्या केदारश्रेणीव वाणी । अधिकामितसङ्गाः स्त्रियः पुरुषाश्च । अधिकवचस्थितिरम्या भटाः शुकाश्च । अधिकवलिताः शत्रवः स्त्रीकटाक्षाश्च । अधिकम्परहिता रणे भटाः सभासु वाचः ।

किं च, सिन्धुष्विवाधिकपोतविचारो गृहप्राङ्गणेषु वलभीविटङ्केषु च । महारण्येष्विवाधिककोकागमविलसनं कामिषु प्रमदवनेषु च । शत्रु-

---

इति परिहारः । विरोधस्तु शब्दतः । **किं चेति** । तानो नाम गानगुणभेदः । सदः सभाः । वितानमुल्लोचः । 'असानगिरी' इति महाराष्ट्राः । अवितानि रक्षितानि । मण्डलानि देशाः । इति परिहारः । अत्र तानि वितानि अवितानीति क्रमेण विरोधः शब्दतः । हारि मालायुक्तम् । विहारि पक्षिवन्मनोज्ञम् । 'हारि वल्गु' इत्यमरः । 'खगौ वा गुच्छौ वा कनककलशौ वा किमु कुचौ' इति बिह्लणः । अविः पर्वतस्तद्वन्मनोज्ञमिति परिहारः । विरोधपरम्परा शब्दतः । 'अवयः शैलमेषार्काः' इत्यमरः । **यस्मिन्निति** । गिरिवत्पर्वतवद्विभ्रमः शोभा येषां ते । 'विभ्रमः । शोभायां संशये हावे' इति हैमः । पक्षे गिरीति सप्तमी । वाचि विषये भ्रमहीनाः । मदो हर्षो गर्वश्च । 'सुप्रतीको भेद्यलिङ्गः शुभाङ्गे दिग्गजे पुमान्' इति रत्नमाला । सार्वभौमो दिग्गजभेदो राजा च । कलमा धान्यभेदाः । पक्षे कला अव्यक्तमधुरा च सा महिता च पूजिता । अन्यहृद्या । पक्षे धान्यहृद्या । अधिकामितसङ्गा अधिकापेक्षितसुरताः । अनेन स्त्रीपूर्वकानुराग उक्तः । पक्षे अधिकोऽमितः सङ्गो येषाम् । अनेन पुरुषाणां दृढच्युतित्वमुक्तम् । 'अधिकपयःश्रियं वहन्त्यः' इति माघप्रयोगात् अधिशब्दोऽधिकवाचकः । कवचस्थितिः । पक्षे वचःस्थितिः । कवलिता वलिताश्च । कम्परहिताः परहिताश्च । **किं चेति** । 'यानपात्रे शिशौ पोतः' इत्यमरः । पक्षे कपोतः पक्षिभेद इत्यर्थत्रयम् । विटङ्कं पारावतस्थानम् । अरण्यपक्षे कोको वृकः, कामिपक्षे तु कोकागमः कामशास्त्रम् ।

रिवाधिकमलयशोभाधरो वसन्ते वायुर्युवसु स्त्रीकटाक्षश्च । ग्रीष्मेष्विवाधिकाकोलदर्पहृतिर्विषवैद्येषु मृगयासु च । स्त्रीजनतेवाधिकम्पाकामितश्रीरहिततति: कविता च । पिका इवाधिकलालापा बालका विद्वांसश्च ।

किं च, अधिकपटोल्लसिता अधिकचोरीकृतशोभा अधिकोपचारविदग्धाः स्त्रियो न पुरुषाः ।

अद्भुतमेतत्—यदेते राजसचिवा बहुलरचितशोभां वहन्ति । तथाहि—लक्षोपकारमन्त्रविदो रक्षोपकारमन्त्रविदश्च । लक्षणप्रकारज्ञा रक्षणप्रकारज्ञाश्च । लताङ्गीकृतप्रणया रताङ्गीकृतप्रणयाश्च । किं च, बहुललामान्विता बहुलरामान्विताश्च । बहुलमण्यालिङ्गितवक्षसः बहुरमण्यालिङ्गितवक्षसश्च । बहुलाज्योपभोगक्षमा बहुराज्योपभोगक्षमाश्च । बहुलचितशुभाचारा बहुरचितशुभाचाराश्च । बहुलसाहसोचिता बहुरसाहसोचिताश्च ।

---

प्रमदवनपक्षे तु कोकश्चक्रवाक इत्यर्थत्रयम् । एवमग्रेऽपि क्रमेणार्थः । यशश्च भा च यशोभे । अधिकं मलं पापं ययोस्ते अधिकमले । तादृशे च ते यशोभे च तयोर्धरः । पक्षे मलयः पर्वतभेदः । पक्षे कमलम् । 'कटाक्षाः संफुल्लत्कमलदलकूलंकषरुचः' इत्याश्चर्यचम्पूः । अधिकेति च्छेदः । कोलः प्लवः । ग्रीष्मे जलाभावादिति भावः । पक्षे काकोलो विषभेदः । पक्षे कोलः पोत्री । पाका डिम्भाः । पुत्रवतीति भावः । पक्षे अधिकम्पेतिच्छेदः । अधिककम्पेत्यर्थः । न विद्यते कामितश्रीर्यस्याः सा अकामितश्रीः । पक्षे पाको द्राक्षादिः । कलः अव्यक्तमधुरो ध्वनिः । पक्षे लालापं लालाजलबृन्दम् । पक्षे कला विद्या । **किं चाधिकपटेति** । पटो वस्त्रम् । पक्षे कपटश्छद्म । कचेषूरीकृता अङ्गीकृता शोभा याभिस्तास्तथोक्ताः । पक्षे चोरीकृतशोभाः । उपचारः । पक्षे कोपचारः क्रोधसंचारः । **अद्भुतमिति** । सचिवा मन्त्रिणः । बहु-ल-र-चितशोभाम् । लकाररेफयोः शोभामित्यर्थः । तथाहि तदेवोपपादयति—लक्षं शतसहस्रम् । रक्षसामपकारः । 'वेदभेदे गुप्तवादे मन्त्रः' इत्यमरः । लताङ्गी वनिता । किं चेति विच्छित्तिविषये सूचनार्थम् । ललामं भूषणम् । आज्यं घृतम् । चितः संबद्धः । रसः प्रेम । तेन हास्योचितो न ।

किं च, सगदः कुमुदक एव। पुण्यजनद्वेषिणी कौमोदक्येव। नाभिजातः सनदेव। अप्रमदः सनत्कुमार एव। उग्रप्रियाः पशव एव। विषमदृष्टिः पशुपतिरेव।

अपि च, मधुस्थितिः सरसिजेषु। मागधोल्लासः स्तुतिपाठसमये। रसभङ्गयुक्तत्वं तरङ्गिणीषु। कुप्रीतिर्महावराहस्य। कुमारिकाख्यातिः कन्यानाम्। कुमुदाकरत्वं सरसाम्। विषमहितता सर्पाणाम्। दुष्कीर्तिः कुल्यासु। दुर्बीजदर्शनं मन्त्रशास्त्रे। कुशासनग्राहित्वं तापसानाम्। सवितृद्वेषः सैंहिकेयस्य। मातृविरोधः शुम्भस्य।

किं च, कुवेण्याख्या मत्स्याधान्या न वनितानाम्। विकचासङ्गो ग्रहाणां न यूनाम्। पराभवः संवत्सरेषु न सैन्यस्य।

विनायकत्वं गरुडेभवक्त्रतथागतेष्वेव मुहुर्ल्लास।
सभासु सेनासु नितम्बिनीषु माणिक्यमालासु न वै बभूव ॥६॥

---

'असमरसाहसोचितः' इति वासवदत्ता। **किं च सगद इति**। सगदः सरोगः सकौमोदकीकश्च। कुमोदको विष्णुः। अत एव कौमोदकी विष्णुगदा। सनत् चतुर्मुखः। अत एव 'सनत्कुमारो वैधात्रः'। पशवः प्रमथाः। अत एव पशुपतिः शिवः। कुमोदकसनत्पशुपशब्दानामप्रसिद्धत्वात्तदर्थज्ञापनार्थं कौमोदकीसनत्कुमारपशुपतिशब्दास्तत्तदग्रे प्रयुक्ताः। 'विष्णुः कुमोदकः शौरिः' इति दुर्गः। 'हंसगो द्रुहिणः सनत्' इति रभसः। 'पशुर्मृगादौ छगले प्रमथेषु पुमानयम्' इति च। **अपि चेति**। मधुर्दैत्यभेदः क्लीबे मकरन्दश्च। मागधो जरासंधः स्तुतिपाठकश्च। 'भङ्गस्तरङ्गभेदे च रुग्विशेषे' इत्यादि हैमः। कुः पृथ्वी। पक्षे 'पापकुत्सेषदर्थे कुः' इत्यमरः। कुत्सितमारिका कुत्सितमुदामाकरत्वम्। दुरिति दुर्गामन्त्रबीजाक्षरम्। 'सत्ताबीजं च दुर्बीजं इति तन्त्रसारे। कुशे कृतासनम्। 'जनकः सविता पिता' इति धनंजयः। मातरो ब्रह्माण्याद्याः। विकचा विधवा। 'शुक्रे केतौ च विकचः' इति विश्वः। 'विनायकस्तार्क्ष्यविघ्नविघ्नेशेषु गुरौ जिने' इति लिङ्गभट्टः। 'नायको नेतरि श्रेष्ठे हारमध्यमणावपि' इति विश्वः। तथागतो

अपि च, सुमनःसु पतितद्विजः पूषा । उग्रकराभियोगभाक् कमलवर्गश्च । सच्चक्रशब्दवाच्येष्वरसंगतशोभमायुधं सूर्ययोगहृष्टं कोकमाहुः । कलोल्लसितेषु कलङ्की चन्द्रः पक्षपाती पिकश्च ।

किं च, श्रीमत्सरस्थितिः क्रीडोद्यानेषु कण्ठेषु च न लोकेषु । अलङ्कारोचितत्वं सीतायाः पद्यानां च न जनानाम् । सततमहीशमदो जलदकालः सर्पराजे न राजसु ।

किं च, अपदानि शत्रुवृन्दानि पद्यकदम्बं च । सत्पद्यानि कविनिकुरुम्बाणि शत्रुजालं च । अनुगतमृडानि योगिचक्राणि स्त्रीजातं च । पवित्राणि द्विजकुलानि शस्त्रं च । नालानि नालीवृन्दानि गजयूथं च । भानि नक्षत्राणि जनकदम्बं च ।

सत्सङ्गरहितभावं विषमहितत्वं च पल्लवरुचिं च ।
सैन्ये सरसि रमण्यो जानन्त्याम्रद्रुजालेषु ॥ ७ ॥

---

जिनः । अपि चेति । सुमनःसु विद्वत्सु देवेषु पुष्पेषु चेत्यर्थत्रयम् । पतितद्विजो भ्रष्टब्राह्मणो गतदन्तश्च । 'पूष्णश्चापातयद्दन्तान्कालिङ्गस्य यथा बलः' इति भागवतम् । उग्रकरः क्रूरबलिः सूर्यश्च । सच्चक्रं सज्जनवृन्दं समीचीनचक्रवाकश्चेत्यर्थत्रयम् । अरसमिति गतशोभमिति च च्छेदः । पक्षे अराणि चक्रधाराः । सूरिभिरयोगः । पक्षे सूर्यो हेलिः । कला विद्या चन्द्रस्य षोडशभागः कलो ध्वनिभेदश्चेत्यर्थत्रयम् । लङ्कायां रोचितत्वं प्रकाशितत्वं कारा बन्धनगृहमित्यर्थत्रयम् । सततं मही भूमिस्तस्याः शमदः शान्तिप्रदः । पक्षे सततमिति च्छेदः । अहीशस्य मदो गर्वः । पक्षे महीशः पृथ्वीश इति गर्वः । किं चेति । अपदानि स्थानरहितानि । पक्षे 'अपदानं कर्म वृत्तम्' इत्यमरः । तदस्यास्तीति तथोक्तम् । इत्येकवचनबहुवचनश्लेषः । एवमग्रेऽपि । पद्यं श्लोकः । पक्षे समीचीनेन पदा यानि यानयुक्तम् । मृडः शिवः । मृडानी पार्वती । पवित्राणि पावनानि । पक्षे पविवद्वज्रवत् त्राणि रक्षणयुक्तम् । 'नालं नाली पद्मदण्डे' इति सुधा । पक्षे आलानं गजबन्धनम् । विश्रृङ्खलमित्यर्थः । मत्तत्वात् । भानि भशब्दवाच्यानि । पक्षे भानम् । सदिति । संगरः । विषं जलम् । पल्लवः

किं बहुना,

विधुः संपदि चापेऽसौ सोमस्तारापतिर्गिरि।
तस्मादस्मिन्महीपाले राजत्वं राजते सदा॥ ८॥

किं च,

धनुर्विद्यावतां श्रेयाञ्ज्योतिषां योंऽशुमानिव।
यशसा यस्य भाति स्म द्वितारानाथवज्जगत्॥ ९॥
यस्य प्रकृतयो वश्या इन्द्रियाणीव चेतसः।
नयेन तस्य विद्येव शुशुभे तेन मेदिनी॥ १०॥
पुरी यस्य जनैः पूर्णा जना गुणगणैरिव।
हया यस्य जवैर्युक्ताः सपक्षा इव मारुताः॥ ११॥
भूमेरकृष्टपच्यत्वाद्द्विषां निःशेषितत्वतः।
यस्मिन्राजनि जानीमो ज्याकृष्टिर्नैव विद्यते॥ १२॥
प्रजाभूत्यर्थमेवास्य धृतिश्चापकलत्रयोः।
संख्योल्लसन्तो जानन्ति तद्विग्रहसुलक्षणम्॥ १३॥
वेणी स्रोतो निशा रात्री रतिः कामनितम्बिनी।
रोहितं यद्रिपुस्त्रीणामृजु शक्रशरासनम्॥ १४॥

किं च, यश्च सत्तिलकतया चित्रकामितसौन्दर्यः। सद्वलयभूषिततया

---

किसलयः। पक्षे सङ्गः। विषमं निम्नोन्नतम्। पल्लवो विटः। **किं बहुनेति**। विधुर्विष्णुः। सोमः शिवः। तारापतिर्गुरुः। राजत्वं भूपत्वमिति तत्त्वार्थः। चमत्कारार्थस्तु—राजा चन्द्रः। अत्र चन्द्रवाचकबहुशब्दलाभः। 'त्रिपुरघ्नो धनुष्मताम्' इति श्रीभागवतम्। **किं चेति**। श्रेयान् श्रेष्ठः। द्विविधचन्द्रयुक्तः। प्रकृतयो मन्त्रिणः। अकृष्टपच्यत्वात्कर्षणं विना फलितत्वात्। 'अकृष्टपच्या तस्यासीत्सप्तद्वीपवती मही' इति भागवतम्। ज्या भूमिर्मौर्वी च। प्रजानां लोकानां भूतिः संपत्। पुत्राणामुत्पत्त्यर्थं च। संख्या ज्ञानं क्लीबे युद्धं च। 'विग्रहः समराङ्गयोः' इति धरणिः। वेणी प्रवाहः कबररचनाभेदश्च। निशा हरिद्रा। रतिः सुरतम्। रोहितं कुङ्कुमम्। अनेन रिपुस्त्रीणां वैधव्यमुक्तं भवति। तिलकचित्रकयोर्वलयक-

विपुलकटकरचितपुंनागशोभान्वितः । गौराम्बरतया शुभ्रानन्तश्रीविराजितः ।

किं च, माधवतया वैशाखेडितः । अम्बिकानन्दनतया वैचित्रवीर्यः । निर्जरतया वैमानिकामितरूपः । सन्मालालंकृततया वैजयन्त्युद्भूतिरुचिरः । सुमुखोऽपि वैमुख्यस्थितियुक् । सर्वसुहृदपि वैरोचितः । मैत्र्याधिकासक्तोऽपि वैराधिकासक्तः । वैकुण्ठोऽप्याशुगसंप्रदायज्ञः ।

अपि च, यस्य च पुरी अयोध्येव द्वारका । यत्र हि रामानुरक्ता

---

टकयोर्गौराम्बरशुभ्रानन्तयोरेकार्थकत्वात्कश्चिच्चमत्कारः । 'तिलकं बिन्दुचित्रकम्' इति ध्वनिमञ्जरी । पुंनागः पुरुषश्रेष्ठः । इति चमत्कारपक्षेऽर्थः । तत्त्वार्थस्तु—तिलकः श्रेष्ठोऽद्भुतापेक्षितसौन्दर्यः । सद्वलयः सज्जनवृन्दम् । कटो गजगण्डः । करः शुण्डादण्डः । चिता संबद्धा पुंनागशोभा तयान्वितः । गौराम्बरः पीतवासाः उद्दीप्तापरिमितसंपच्छोभितः । 'शुभ्रमुद्दीप्तशुक्लयोः' इत्यमरः । 'गौरोऽरुणे सिते पीते' इति च । **किं च, माधवतयेति** । माधवो वैशाख इतीडितः स्तुतश्चेति चमत्कारः । तत्त्वार्थस्तु वै इति च्छेदः । शाखा वेदभेदाः । एवमग्रेऽपि अम्बिका धृतराष्ट्रमाता । नन्दनः पुत्रः । वैचित्रवीर्यो धृतराष्ट्रः । पक्षे—चित्रपराक्रमो जननीहर्षकश्च । 'नन्दनं वासवोद्याने सुते ना हर्षके त्रिषु' इति रत्नमाला । निर्जरः देवः । वैमानिका देवाः । पक्षे—युवा मानिभिः कामितसौन्दर्यः । वैजयन्ती माला । पक्षे—'रोहिण्यामर्धरात्रे च यदाकाला(ले ऽ)ष्टमी भवेत् । जयन्ती नाम सा' इति स्मृतिः । 'संपत्तिभस्मजननेषु भूतिः' इति लिङ्गाभट्टः । वैमुख्यं विमुखत्वमिति विरोधः । वै इति च्छेदः । मुख्यस्थितियुगिति परिहारः । 'यत्र चतुरंगोपशोभिताः सङ्ग्रामा इव ग्रामाः' इति नलचम्पूप्रयोगः । 'मनोहरा वैश्रवणस्य लक्ष्मीः' इति भामिनीविलासः । 'न हिमानी निषीदति' इति कविराक्षसः । 'हानिदाघप्रशान्तिः' इति विश्वगुणादर्शकृत् । 'स हिमानीगिरिस्थितः' इति वासवदत्ता । एवं पूर्वप्रयोगेषु चेति वै इति हेतिपदविभागदर्शनादत्रापि चामीकरोज्ज्वला इत्यादिषु साधुत्वमङ्गीकार्यं सहृदयैः । **अपि चेति** । उद्धव उत्सवः । सुयज्ञ ऋषिभेदः । लसद्दृशा

उद्धवप्रणयिनः अक्रूरकर्मानुकूलाः सुमन्त्रोल्लसिताः सुयज्ञाभिरामा लसद्दशरथाः सुमित्रोपेता निवासिजनाः।

यत्र च स्तननरुचिरो मेघ एव न स्त्रीजनः। मदनरुचिरवासुदेव एव न गजसंघः। कदनमञ्जुर्भटवर्ग एव न कुन्तलकलापः।

किं च, भवनभूषणानि केतकदलानीव कलत्राणि।

अपि च, क्वणनमञ्जुलापि न क्वणनमञ्जुला वीणा।

कथं न सा स्वर्गादतिरिच्यते। यतः, यत्र स्वर्गे सदापविघटितत्वम्। महाकुलगिरिपक्षच्छेदके प्रभुता। कुमुदहितकारिण्याः करिण्या अनुपमाभिधानरमणीयता। वसन्तं माधवमसुमनसं प्राहुः। सदामलकविस्पष्टस्पर्धिनं गुरुमाहुः। सदाशक्रयशोभां वहति देवगणः। कृशानुभावमङ्गी-

---

रथा येषां ते। दशा अवस्था। **यत्र च स्तननरुचिर इति**। स्तननं गर्जनम्। पक्षे स्तनविषये न रुचिर इति न। रुचिर एवेत्यर्थः। द्वौ नञौ प्रकृतमर्थं सातिशयं गमयतः। 'रविरिव क्षणदानप्रियः' इति वासवदत्ताप्रयोगः। मदो गजदानोदकम्। कदनं युद्धम्। पक्षे—कदो मेघः। 'कं शिरोऽम्बुनोः' इत्यमरः। 'स्तनमण्डलमाश्रित्य न स्वस्य वरयोषिताम्। कदाकर्णयते गीतं रमया सह रङ्गराट्॥' इति प्राञ्चः। तत्र हेकदेति संबुद्धिः। **किं चेति**। भवो हरः। केतकानां शिवपूजार्थत्वं नास्तीति शैवागमः। **अपि चेति**। क्वणक्वणनशब्दावेकार्थवाचकौ। 'क्वणनमित्यपि' इत्यमरः। **कथमिति**। अपां समूह आपम्। स्वर्गे जलाभाव इति भावः। 'महापायससुद्राय' इति विश्वगुणादर्शकृत्। महदापं जलवृन्दं यत्र तस्मै इत्यर्थः। इति स्वर्गनिन्दापक्षेऽर्थः। तत्त्वार्थस्तु—पविर्वज्रम्। आकुलगिरीति च्छेदः। व्याकुलवाचीत्यर्थः। पक्षो मित्रम्। पक्षे—कुलगिरयो हिमवदादयः। पक्षो गरुत्। कुमुद्भूसंतोषः। तस्या अहितकारिणी। भूशब्दोऽत्र भूमिस्थोपलक्षकः। मार्गाश्चलन्तीतिवत्। शक्यसंबन्धो लक्षणा। पक्षे—कुमुदो दिग्गजभेदः। अनुपमा तत्पत्नी। वसन्तं स्थितम्। माधवं नारायणम्। असुमनसं देवभिन्नम्। पक्षे—ऋतुभेदं जातीपुष्परहितम्। अमलकेन स्पर्धायुक्तं महान्तम्। पक्षे—अमलः कविः शुक्रः। गुरुर्धिषणः। सदैव। दाशाः कैवर्ताः। क्रयः विक्रयः। पक्षे—शक्र इन्द्रः। कृशप्रभावम्। पक्षे—अग्नि-

चकाराग्निः । वैवस्वतं यमदेवमाहुः । वरुणस्तु न विप्रचेताः । अलीकदृष्टिः शिवः । कुबेरस्तु गुह्यकामितप्रणयः । किं बहुना, स्वः पुरंदरं वहतीति लोकापवादः ।

अलमतिविस्तरेण । यश्च,

सुरवरदः सुरवरदः सकलः सकलो बली बली सततम् ।
ललितप्रमदो ललितप्रमदः सरसश्च सरसश्च ॥ १५ ॥

पादे यस्य हि मालती कुवलयं यस्योदरे राजते
　　वक्षोलंकरणं तनोति कमला वासोऽपि कोशालये ।
कुन्दश्रीः कुमुदोल्लसच्च भवनद्वारोपशल्यं सदा
　　जीयात्सत्सुमनोभिरामचरितः श्रीकृष्णकल्पद्रुमः ॥ १६ ॥

यस्य च पञ्चधारातिभयंकरमपि सहस्रधारातिभयंकरमश्ववृन्दम् । अस्त्वेतत् । स हि कदाचिन्निरन्तसुखानुभवकुण्ठेतरमहिम्नि वैकुण्ठे वनितासु न चरमया रमया रममाणो धरणितलशोभादिदृक्षया तत्र तत्र पर्य-

---

त्वम् । यं अदेवम् । न विद्यते विप्रेषु चेतो यस्य सः । नसमासः । पक्षे प्रचेता नेति विप्रचेताः तादृशो नेति न विप्रचेताः । प्रचेता एवेत्यर्थः । विरभाववाची । अलीकदृष्टिरसत्यज्ञानः फालनेत्रश्च । 'दृष्टिर्ज्ञानेऽक्ष्णि दर्शने' इत्यमरः । 'अलीकमनृतं प्रोक्तं ललाटाप्रिययोरपि' इति लिङ्गाभट्टः । स्वःपुरमित्येकमेव पदम् । दरं भयम् । पक्षे—स्वरिति च्छेदः । **सुरवरदेति** । सुराणां वरदः । शोभनो रवो रदाश्च यस्य । सविद्यः पूर्णश्च । बलवान् बलभद्रवांश्च । मनोज्ञस्त्रीकः । ललितं हावभेदस्तेन प्रकृष्टसंतोषः । सश्टङ्गारः सभूमिश्च । **पादे यस्येति** । मालती गङ्गा । कुमुदो वैकुण्ठद्वारपालभेदः । उपशल्यं प्रान्तस्थानम् । यद्यपि 'ग्रामान्त उपशल्यं स्यात्' इत्यमरस्तथापि विशेषशब्दोऽत्र सामान्यपरः । अत्र पुष्पवाचकबहुशब्दलाभः । **यस्येति** । पञ्च धारा अश्वगतिभेदः । 'गतयोऽमूः पञ्च धाराः' इत्यमरः । सहस्रधेति च्छेदः । अरातिः शत्रुरिति परिहारः । विरोधस्तु सुगमः । **स हि कदाचिदिति** । न चरमया अपश्चिमया । श्रेष्ठयेति यावत् । खड्गादि-

टन्नेकाकी कस्मिंश्चित्प्रदेशे खड्गचक्रशरासनशिलीमुखोद्भासितं मत्तसारङ्गहरिचक्रिशोभितमनेकभूदारकुलसेव्यमानपादं महाराजमिवाशेषभूभृदुत्तंसं कंचन पर्वतं ददर्श।

स एव हि वरचक्षुःश्रवणनिर्जरकन्यकाविहारभूमेर्विश्वाधिकां काञ्चनश्रियं वहतो धराधरख्यातिं गतस्य गौरद्युतेरगराजस्यापत्यं नागराजस्यांशावतारः शेषाचलो नाम। यश्च गिरीशोऽपि चन्द्रस्वरूपः। तुङ्गभद्राकृतिरपि शतद्रुशोभितः।

अथ चैनमालोकयतस्तस्य चेतसि चिन्ता समजनि। किमयं विन्ध्यो भवेत्। नहि नहि। स हि करीरजाततिरस्कृतमहिमा। अयं पुनः स्वपादैकदेशाश्रयवर्धितकरीरजातः। नापि मेरुः। स च सुराक्रीडम्। नापि महेन्द्राद्रिः। स ह्येकरामाश्रयः। अथ वा सोऽयमेव भवेत्।

---

चतुष्टयमायुधभेदः। पक्षे—खड्गमृगः। कोकः। शरवृक्षः। असनवृक्षः। भृङ्गाः। गजाश्वस्यन्दनम्। पक्षे—गजसिंहसर्पाः। भूर्दारा येषां ते राजानः। पक्षे—'क्रोडो भूदार इत्यपि' इत्यमरः। 'पादा मूलेस्तुर्यांशाङ्घ्रिषु प्रत्यन्तपर्वताः' इति हैमः। 'भूभृद्भूमिधरे नृपे' इत्यमरः। **स एवेति**। अगनागेति शब्दतो विरोधः। पर्वतः सर्प इति परिहारः। शेषांशो मेरुपुत्रो वेङ्कटाद्रिरिति पुराणम्। उत्तमनेत्रकर्णदेवस्त्रीविहरणयोग्यक्षोणीकः। पक्षे—उत्तमसर्पतरुणकुमारीसुरतस्थानम्। 'भूमिः क्षितौ स्थानमात्रे' इति हलः। 'कन्या नार्यां कुमार्यां च' इति हैमः। सुवर्णसंपदम्। पक्षे अनिर्वाच्यविषयाम्। 'गौरोऽरुणे सिते पीते' इत्यमरः। **यश्चेति**। शिवः सुधांशुरिति विरोधः। पर्वतश्रेष्ठः स्वर्णस्वरूप इति परिहारः। 'चन्द्रः कर्पूरकाम्पिल्यसुधांशुस्वर्णचारुषु' इति सुधा। उत्तुङ्गमङ्गलाकृतिर्वृक्षशतशोभित इति परिहारः। द्वे नद्याविति विरोधः। **अथ चैनमिति**। करीरजातः अगस्त्यः। क्लीबे वृक्षभेदवृन्दमिति तत्त्वार्थः। चमत्कारस्तु शब्दत एव। 'करीरस्तरुभेदे स्याद्धटे वंशाङ्कुरेऽपि च' इति लिङ्गाभट्टः। सुराणां मद्यानामिति निन्दा। देवानामिति तत्त्वार्थः। 'ह्येयमाक्रीडमुद्यानम्' इत्यमरमाला। पशुभेद इति निन्दा। परशुराम इति तत्त्वार्थः। **अथवेति**। भोगिनो विलासिनः। पक्षे सर्पाः। 'भोगः

शेषमारुतविवादेन भूतलं प्राप्तः दिव्यभोगिकुलप्रणयिनः कलधौतरूपस्य रत्नसानोरपत्यं सर्पराजस्यांशावतारो भगवान्भुजंगाद्रिः । भवतु यो वा को वा । अवगाह्य पश्यामीति ।

ततश्च तथा कृत्वा सानुगोऽप्येकाकी सुपादोरुनितम्बमध्यदेशोल्लसन्नाभिशोभां सुललितकर्णनेत्रां शिखरमनोज्ञदन्तावलीविराजितां कुन्तलसत्केतकसुमां पुंनागस्पृहणीयां पर्वतैकदेशस्थलीं तत्र कांचन वनदेवतां चापश्यत् ।

अथ तया वनदेवतया देव, अयमद्भुतनिदानं पर्वतेन्द्रः । यतोऽस्य मनोजवसत्त्वम् । तथाहि—अत्रेदं नन्दनं वनम् । यत्र समन्दारानन्दम-

---

सुखे रुयादिभृतावहेश्च फणकाययोः' इत्यमरः । 'कलधौतं रूप्यहेम्नोः' इत्यमरः । **ततश्चेति** । अनुगा भृत्या इति विरोधः । 'स्नुः प्रस्थः सानुरस्त्रियाम्' इत्यमर इति परिहारः । प्रत्यन्तपर्वतः । उत्कृष्टकटकः । अन्तरस्थानम् । मृगभेदः । पक्षे—चरणम् । उत्सङ्गः । कटिपश्चाद्भागः । वलग्नप्रदेशः । अवयवभेद इति । 'नितम्बः पश्चिमश्रोणिभागेऽद्रिकटके कटौ' इति शब्दार्णवः । 'न्याय्यावलग्नयोर्मध्यमन्तरे चाधमे त्रिषु' इति रभसः । कर्णो मृगभेदः । नेत्रं तरुमूलम् । पक्षे—स्पष्टोऽर्थः । शिखरमग्रभागः । दन्ताः सानूनि । पक्षे—रत्नवन्मनोज्ञदन्तपङ्क्तिशोभिताम् । 'शिखरं पुलकाग्रयोः । पक्वदाडिमबीजे च माणिक्यशकलेऽपि च' इति हैमः । 'दन्तो गिरिनितम्बे च दशने सानुनि स्मृतः' इति विश्वः । 'श्रुतिमुक्ताः शिखरोपमा बभूवुः' इति भानुदत्तः । कुन्त आयुधभेदः । पक्षे—कुन्तलाः केशाः । 'पुंनागस्तु सितोत्पले । जातीफले नृपश्रेष्ठे पाण्डुनागे द्रुमान्तरे ॥' इति सुधा । **अथ तयेति** । 'निदानं त्वादिकारणम्' इत्यमरः । 'मनोजवसः पितृसंनिभः' इत्यमरः । 'प्राप्तं सर्वगुणैर्मनोजवसतां प्रासूत नर्कंचरी' इत्यनन्तभट्टः । शेषाचलस्य मेरुपुत्रत्वान्मेरुसमान इति भावः । अत्र गिरौ । नन्दनं हर्षकम् । मेरुपक्षे—वासवोद्यानम् । मेरौ नन्दनवनमस्तीत्यार्याः । 'रम्या मेरुचिराश्रया । नन्दनोद्यानमालेव खस्थैरालोच्यतां कथा ॥' इति नलचम्पूः । यत्र वने । सममविषमं यथा तथा । दारानन्दं भार्यानन्दम् । पक्षे—

नुभवति जनः प्राप्नोति च संतानसुखम् महाकल्पलताङ्गीकरणबद्धस्पृहश्च । लसद्विपारिजातं हरिचन्दनं च पश्य । किं च, सदाखण्डलसद्विचारश्च लसति । सदामरालीसंचारश्च राजते । ललिताप्सरसां गणश्च शोभते ।

अपि चायं क्वचिद्धातुरागरञ्जिताम्बरो मस्करी दर्भासनभूषितः परिगतमुनिगणो निकटशोभमानकरीरो निरुद्धाशावकाशोऽनुकरोति संन्यासिनः । क्वचित्सनारदः पर्वतत्वं सफलयति । क्वचित्कौशिकमदनार्कसोमशिखिवरुणावासतया स्वर्ग इवोपलक्ष्यते ।

(किंचिद्विहस्य ।) देव, इतः पश्य । अत्र हरिपतिर्गजं विदार-

---

स इति च्छेदः । स प्रसिद्धो जनः । मन्दारानन्दम् । एवमग्रेऽपि । संतानं संततिः । पक्षे—वृक्षभेदः । महानाकल्पो वेषो यस्याः सा महाकल्पा । तादृशी च सा लताङ्गी वनिता चेति कर्मधारयः । तस्याः करणानि नागादिबन्धास्तेषु बद्धस्पृह इति जनस्य विशेषणम् । पक्षे—महती या कल्पलता तस्या अङ्गीकरणम् । लसच्च तद्विपारिजातं सिंहवृन्दम् । पक्षे—लसन् विः पक्षी यस्य स लसद्विः तादृशो यः पारिजातः । हरिचन्दनं गोशीर्षं तरुभेदः । 'पञ्चैते देवतरवो मन्दारः पारिजातकः' इत्यमरः । किं चेति । आखण्डलसत्पक्षिसंचारः पक्षे—आखण्डल इन्द्रः । समीचीनविचारा मराली हंसी । पक्षे अमराणामालिः । ललिताप्सरसां मनोज्ञजलजलाशयानाम् । पक्षे—सुरवनितानाम् । अपि चायमिति । 'अम्बरं व्योम्नि वाससि' इत्यमरः । मस्करी वेणुयुक्तः । दर्भस्तृणभेदः । असनः करीरश्च । पक्षे—करीरः कलशः । 'मुनिर्यतीङ्गुदीचूतप्रियालागस्त्यकिंशुके' इति विश्वः । 'आशा दिगभिलाषयोः' इति च । 'अनुकरोति भगवतो नारायणस्य' इति कादम्बरी । नारदो मेघ इति तत्त्वार्थः । द्वावपि ऋषिभेदाविति चमत्कारः । 'महेन्द्रगुग्गुलूलूकव्यालग्राहिषु कौशिकः' इत्यमरः । 'मदनः स्मरवृक्षयोः' । 'वरुणस्तरुभेदे स्यात्प्रतीचीपतिसूर्ययोः' इति विश्वः । 'शिखिनौ वह्निबर्हिणौ' इत्यमरः । 'सोमो मनोहरे चन्द्रे' इत्युत्तरतन्त्रम् । किंचिद्विहस्येति । ऋक्षो जाम्बवान् । रामो लक्ष्मणश्च प्रसिद्धः । अन्ये हरिपत्यादयो नव सुग्रीवादिकपिभेदाः । इति

यति । शरभः केसरिणं बाधते । ऋक्षस्त्रासितलक्ष्मणः । रामो नलं भक्षयति । नीलो गवयश्चोन्मूलितरम्भः पनसमपि भङ्क्तुमिच्छति ।

अनन्तशाखोल्लसितागमश्रीर्न्यङ्कुव्रजाराधितपाददेशः ।
नानाद्विजालापमनोहरोऽयमाचार्यलीलां विवृणोति शैलः ॥ १७ ॥

इन्द्राणीरुचिरतराप्सरोभिरामो ज्ञातैरावतवरकुम्भरम्यलक्ष्मीः ।
सोऽयं निर्जरवनिताविहारभूमिः शैलेशः प्रथयति पाकशासनत्वम्॥१८॥

किं च,

सुहितमिलिन्दा बहुलमरन्दा परिमलपुञ्जाकलितकरञ्जा ।
इह नृप मल्लीव्रततिमतल्ली निबिडितपत्रा कुसुमविचित्रा ॥ १९ ॥

(साश्चर्यम् ।) इत उत्तरतो देहि दृष्टिम् । मधुरावन्यां कृष्णेनेव धन्यां कृष्णवर्त्मना क्रीडितं भवेत् । यतोऽयं पर्वतैकदेशो हीनबको नष्टहंसो मृदितसृगाल उत्सन्नबाणो दग्धभूमिजस्त्रासितगजमल्लः ।

दलन्मल्लिकाजालनिर्यत्ननिर्यन्मरन्दद्रवासारमत्तालिगीतम् ।
समाकर्णयद्भिः कुरङ्गैर्द्विपारिं विलोक्यापि नो भूभुजंगप्रयातम्॥२०॥

---

हसने हेतुः । तत्त्वार्थस्तु—मृगपशुपक्षिवृक्षभेदाः । नलं तृणभेदः । 'नलादयस्तृणम्' इत्यमरः । नील इति गवयविशेषणम् । **अनन्तेति** । शाखा वृक्षावयवाः । अगमो वृक्षः । पक्षे वेदाः । आगमः पुराणम् । 'न्युङ्कुर्गुरुकुलस्थायिशिष्ये माने मुनौ मृगे' इति रत्नमाला । 'दन्तविप्राण्डजा द्विजाः' इत्यमरः । **इन्द्राणीति** । इन्द्राणी वृक्षभेदश्च । रुचिरतरजलजलाशयाश्चेति द्वन्द्वः । तैरभिरामः । 'ऐरावतोऽभ्रमातङ्गे नारङ्गे लकुचद्रुमे । नागभेदे च पुंसि स्याद्विद्युत्तद्भेदयोः स्त्रियाम् ॥ नपुंसके महेन्द्रस्य ऋजुदीर्घशरासने ।' इति सुधा । 'कुम्भस्तु कुम्भकर्णस्य सुते वैश्यासुते घटे । राशिभेदे द्विपाङ्गे च कुम्भास्त्रिवृति गुग्गुलौ ॥' इति विश्वः । **सुहितेति** । परिमलपुञ्जेनाकलितः संबद्धः करञ्जो वृक्षभेदो यस्याः । कुसुमविचित्रावृत्तमेतत् । **साश्चर्यमिति** । भूमिजो वृक्षः । पक्षे बकादयो दैत्यभेदाः । गजः कुवलयापीडः । मल्लश्चाणूरश्च । **दलदिति** । हे भूभुजंग भूपते ।

इतः पुरस्ताद्भारतसमर इव धनंजयोल्लासो दृश्यते । तथा हि विपक्षीभूय शकुनिर्नश्यति । द्रोणोऽपि मृदितपक्षः । भीष्मोऽयमुलूकोऽपि ग्रस्तः । अत्रात्र पलायितं शल्येन । कर्णोऽपि दग्धः । एकाकिना धार्तराष्ट्रेणोत्पतितम् । अत्रात्र शरासनानां भङ्गः । शिलीमुखाश्च्युतलक्ष्याः संचरन्ति । सर्वे एते भूभृतं खेदयन्ति ।

क्रीडत्कीरां नीलतमालां वनलक्ष्मीं
शक्राश्माढ्ये सानुनि जातां गजवृन्दैः ।
दृष्ट्वाक्रान्तां विस्तृतपक्षो घनबुद्ध्या
नृत्यति पक्षी मत्तमयूराभिध एषः ॥ २१ ॥

किं बहुना ।

फालवत्तिलकोल्लासी रम्भारम्यश्च रूपवत् ।
नेत्रवत्कमलानन्दी कान्तानां पन्नगाचलः ॥ २२ ॥

क्वचिच्च तालाधिकसुन्दरश्रीः क्वचिच्च कुम्भोन्नतचारुलक्ष्मीः ।
क्वचिच्च पीनोच्चकरीरसंपच्छेषाचलोऽयं कुचवन्मृगाक्ष्याः ॥ २३ ॥

इति सादरमुद्दिश्यमानानि वस्तून्यवेक्षमाणः क्वचित्प्रदेशे अगस्त्य-

---

भुजंगप्रयातवृत्तमेतत् । **इतः पुरस्तादिति** । 'आचार्याढकमानेषु काकोले द्रोण उच्यते । द्रोणः स्याद्देशभेदेऽपि' इति लिङ्गाभट्टः । 'पक्षः पार्श्वगरुत्साध्यसहायबलभित्तिषु' इति वैजयन्ती । 'उलूकः कुरुभेदेऽपि पेचके जम्भभेदिनि' इति विश्वः । 'धार्तराष्ट्रः सुराज्ञि स्यात्पक्षिक्षत्रिययोरपि' इति रभसः । 'मधुव्रते खगे बाणे शिलीमुखः' इति लिङ्गाभट्टः । अन्ये पक्षिमृगवृक्षभेदाः । पक्षे योधभेदाः । तदन्यत्सुगमम् ॥ **क्रीडत्कीरामिति** । हरिन्नीलवर्णयोर्व्यामिश्रोक्तिरिति कविसमयः । 'वंशकरीरनीलैः' इति कालिदासः ( माघः ) । 'रामं दूर्वादलश्यामं' इति च । 'काप्यैक्यं हरितकृष्णयोः' इति कविकल्पलता । मत्तमयूरवृत्तम् । **फालवदिति** । तिलको रम्भा च वृक्षभेदः । कमलो मृगः । **क्वचिच्चेति** । तालादित्रयं वृक्षभेदः । पक्षे इभाङ्कं कलश इति । **क्वचित्प्रदेश इति** । उच्चावली उपरि-

भयाद्विलीनमिव सागरं सिन्धुनिर्माणमभ्यस्यतो विश्वस्रष्टुरुच्चावलीव हरिणा कल्पितम् अभिनवसमुद्रनिर्माणसमय इव विधेः पुराणानेकपारावारप्रक्षेपस्थानं विश्वकर्मविनिर्मितसुजनहृदयनिर्मलानेकस्फटिकसोपानावलीप्रतिबिम्बितसुरभिलमरन्दधाराकलितललितबिसकुसुमसौरभ्यलुभ्यन्मधुकरनिकरमञ्जुगुञ्जितसमाकर्णनविवशान्तरङ्गकुरङ्गशावकमारणेच्छानिपतद्विफलीभवदुड्डीनसहस्रमन्दाक्षमुद्रितमत्तशार्दूलं जलार्द्रविशदवसनान्तरितप्रस्फुटोपलक्ष्यमाणपीनोच्चकुचकलशसंजातमत्तमातङ्गकुम्भयुगलभ्रमजनितविदारणस्पृहागतकण्ठीरवकिशोरकभयार्धमज्जद्वनदेवतानिकरं देवार्चनकुसुमावचयासक्तबाल्यावधिबद्धब्रह्मचर्यव्रतदूरीकृतमदनतन्त्राभ्यासमुनिकुमारकनखाङ्कुरक्षतजनितसीत्कारानुमीयमाननजलविहारपरवशजलमानुषीजनवदनपद्मभेदं तटनिकटावटस्थलीनिलीनजृम्भमाणपुंभावलीलाविवशविद्याधरवररमणीमणीममृणमणितश्रवणजनितकपोतपोतकण्ठारावभ्रमभ्राम्यच्छौङ्गेयशतसंकुलं वराहवनितादत्तगाढाङ्कपालीदोहदप्रफुल्लबालकुरबकवनीपरिगततटैकदेशं कामिनमिवोत्कलिकासहस्रमर्जुनमिव सिन्धुराजपरिपन्थिनं ललनाहस्तमिव विलसदूर्मिकाचक्रं उच्चैःश्रवसमिव शुभावर्तहृद्यं साकेतदेशमिवोर्मिलास्यदर्शनमुदितलक्ष्मणं राज्याभिषेकका-

---

तना पङ्क्तिः यां विलोक्याधो बाला लिखन्ति । विशदं धवलम् । अवटो गर्तः । 'तिलच्छन्दस्तु शौङ्गेयो विहंगारातिरित्यपि' इति वैजयन्ती । अङ्कपाली आलिङ्गनम् । दोहदमुपची(च) यकरणोपायः । कुरबको वृक्षभेदः । 'उत्कण्ठायामुत्कलिका सैव हेलातरङ्गयोः' इति रत्नमाला । 'देशे नदविशेषेऽब्धौ सिन्धुर्ना सरिति स्त्रियाम्' इत्यमरः । परिपन्थी समानः । पक्षे शत्रुः । 'भङ्गस्तरङ्ग ऊर्मिर्वा' इत्यमरः । ऊर्मिरेवोर्मिका । पक्षे 'अङ्गुलीयकमूर्मिका' इत्यमरः । आवर्तोऽश्वलक्षणव्यञ्जकचिह्नभेदः । ऊर्मीणां लास्यम् । पक्षे ऊर्मिला सौमित्रिभार्या । 'स्यात्साकेतमयोध्यायाम्' इत्यमरः । 'लक्ष्मणा त्वौषधीभेदे सारस्यामपि योषिति । राम-

लमिव पुण्डरीकच्छायानिषण्णकलहंसं कालियनागमिव कृष्णवेणीसमं कलशपारावारमिव जलैकदेशसुखसुप्तचक्रिणं जनितपद्मं च दृष्टमातङ्ग-कुलविहारमपि शुद्धं सपङ्कजातमपि निष्पङ्कजातं जडाशयमपि नवरसोल्लसितं स्वामिपुष्करिणीति विश्वविख्यातं कमपि कासारमपश्यत् ।/

अथ तदवलोकनाद्विगतपरिभ्रमणायासः क्षणं विश्रम्य हंस इव केवलं क्षीरमयमाहारमुपकल्प्य माध्व इव सद्वातागममभिनन्दंस्तत्तीर एव नक्षत्रगणस्येव संबद्धमूलस्य शिवचन्द्रस्येव सदाबालस्य भागवतस्येव विलसदनेकस्कन्धस्य सुजनस्येव सफलजन्मनः गरुडस्येव सुपर्णस्य चिञ्चातरोरधःप्रदेशे पातालगतागतमार्गमिव वसुंधरानाभिमिव किमपि वल्मीकमवालोकयत् । अचिन्तयच्च—इदमस्माकमावासस्थली भवेत् । यतो निकट एवेयं पुष्करिणी घनरसमयी वनितेव सुखयति सफलितस्वापा

---

भ्रातरि पुंसि स्यात्सश्रीके चाभिधेयवत् ॥' इति सुधा । 'पुण्डरीकं सितच्छत्रे कुष्ठभेदे सिताम्बुजे । ना त्वग्रे राजिले व्याघ्रे दिग्गजे…जरज्वरे ॥' इति रत्नमाला । 'कलहंसस्तु कादम्बे राजहंसे नृपोत्तमे' इति सुधा । कृष्णवेणी नदीभेदः । 'स्वामिपुष्करिणी चैव चन्द्रपुष्करिणी तथा । कृष्णवेणी समा' इति नदीतारतम्ये । पक्षे कृष्णा या वेणी कचरचनाभेदः । अमृतकलशोत्पत्तिहेतुत्वात्कलशपारावारः क्षीराब्धिः । 'चक्री कोके कुलालेऽहौ वैकुण्ठे चक्रवर्तिनि' इति हैमः । 'पद्मोऽस्त्री पद्मके व्यूहनिधिसंख्यान्तरेऽम्बुजे । ना नागे स्त्री पुञ्जिकाश्रीचार्वाटीपन्नगीषु च ॥' इति सुधा । 'मातङ्गः श्वपचे गजे' इति मेदिनी । पङ्कजातं कमलं कर्दमसमूहश्चेति परिहारः । 'आशयः स्यादभिप्राये मानसाधारयोरपि' इति सुधा । डलयोरभेदः । **अथेति** । 'क्षीरं दुग्धे जले' इति सुधा । वातागमो मध्वशास्त्रम् । **तत्तीर एवेति** । 'आदौ शिफायां नक्षत्रे मूलं कुञ्जसमीपयोः' इति लिङ्गभट्टः । आवालं आलवालम् । पक्षे बाल एककलात्मकः । स्कन्धाः स्थूलशाखाः । पक्षे विच्छित्तिविशेषाः । **इदमस्माकमिति** । घनरसो निरन्तरप्रीतिः । अपां समूह आपं शोभनं च तदापं च स्वापम् । पक्षे 'मेघपुष्पं घनरसः' इत्यमरः । स्वापः स्वपनम् । 'प्रिय-

च । अयं वृक्षोऽपि कुटुम्बीव सार्थकितसुतरुतस्तोषयति द्विजाश्रयश्च । इयं कल्याणी गगनगङ्गा निवसत्यविदूरे सखीवानुकूलितकमला धराभियोगहृद्या च । एते पक्षिणोऽपि ऋषिगणा इव पुराणागमप्रणयिनः खेदमपनयन्ति सकलकलाश्च । एष भगवान् क्रोडरूपी हरिरत्रैव निवसति । नूनमयं कलितधराधररुचिरेनां महीं क्षणमपि न विमुञ्चति । इत्येवमालोच्य वासमकरोत् ।

ततश्च गतेषु केषुचिद्दिवसेषु कदाचिद्वामलूरविवरान्निर्गत्य क्वचिद्वनोद्देशे यास्यन् क्रोधजातितया नारायणावतारतया च भूदारं जङ्गममिव रजताद्रिं मूर्तिमन्तमिव रौद्ररसं जनकमिव शेषाचलस्य घोरघृष्यद्धरट्टकसपत्नेन कण्ठारावेण हसन्तमिव पुष्करावर्तं स्मरन्तमिवाद्यापि हिरण्याक्षयुद्धसंरम्भस्य भगवन्तं कुहनावराहमद्राक्षीत् ।

तदनु अनिमिषलोचनलोभनीयश्रीर्लसत्क्रोडाकृतिर्गौरपयोधरराजमानदिव्यकान्तिरचलानन्दहेतुरयं जगत्स्रष्टुर्नासाविवराल्लब्धजन्मा स्तब्धरोमा इयं देवी धरा च । भवतु । दिष्ट्या दृष्टिमार्गमगमदेतन्मिथुनम् । तदेतत्प्रणामविषयीकरोमि । इयं सरलता मद्गुणानां सेयमम्लानता पुष्पाणामवि-

---

तमया सह सुतं सुतं' इति चतुराणां समयः । प्राचुर्यार्थे मयट् । सुतरुता शोभनवृक्षत्वम् । पक्षे सुतानां रुतं ध्वनिः । कमलं जलम् । धरः पर्वतः । स्त्री श्रीभूदेवी च । पुराणागमः । अनभिनववृक्षः । 'कोलाहलः कलकलः' इत्यमरः । पक्षे भागवतादि पुराणम् । पञ्चरात्रादय आगमाः । कला विद्या । धराधरः पर्वत इति तत्त्वार्थः । भूदेव्यधरोष्ठस्वाद इति चमत्कारः । 'वामलूरश्च नाकुश्च वल्मीकं पुंनपुंसकम्' इत्यमरः । घरट्टं धान्यपिष्टीकरणसाधनभेदः । सपत्नः समानः । पुष्करावर्तो मेघभेदः । **तदन्विति** । 'सुरमत्स्यावनिमिषौ' इत्यमरः । 'न ना क्रोडं भुजान्तरम्' इति च । 'अचलानन्ता रसा विश्वंभरा स्थिरा' इति च । पक्षे स्थिरानन्दः । 'स्तब्धरोमा क्रोडो भूदारः' इत्यमरः । **भवत्विति** । मिथुनं युग्मम् । 'दिष्ट्या समुपजोषं

कृतिः क्षीरस्य मणेरकाठिन्यं निधुवनस्यावसानं लक्ष्म्या अचाञ्चल्यं विदुषाममात्सर्यं तपसो निष्कामता मैत्र्या निर्व्याजता स्त्रीणां योग्यसमागमः सुकवेः श्लेषकाव्यरचनावैदग्ध्यं सकलजनश्लाघनीया भवतीति निश्चित्य यावत्तथा कर्तुमिच्छति तावद्वराहदेवोऽपि दूरान्निरीक्ष्य हंहो पुरत एव श्रीनिवास इव लक्ष्यते । अये अधररसविनिर्जितनवसुधे वसुधे, त्वमपि विचारय । तव कुचाभोगेनेव चक्रहृद्येन करेण चन्द्राचलसौन्दर्यहरेण मुखेन सरलतामनोज्ञेन चरितेन मदाश्लिष्टेन लोचनयुगलेन सर्वभूभृद्दर्पहारकेण प्रतापेन राजमानो राजमानहारिवदने वद नेता तवायं श्रियो न वेति सभुजाचालनं कुचधिक्कृतगोत्रया गोत्रया सह संलपन् फुल्लपङ्कजनयनो द्रुतमागत्य पादयोर्नमन्तं स्वेन समं तं वत्स, किमेतत् क भवान् कायं पन्नगाद्रिः कागमनक्रमः क दर्शनम् । अयं परीपाकः प्राचीनपुण्यस्य । इदं फलं तपस्तरोः । इयं सूचना भाविकल्याणप्राप्तेः । सर्वथा नमोऽस्तु भगवतेऽतर्कितघटनापटवे भागधेयायेति व्याहरन् हरन्निव मानसं ध्यानसंगत इव किंचित्स्थित्वा वीरलक्ष्मीनखक्षतायितहिरण्याक्षगदाघातकिणाङ्के वसुमतीकठिनतरकुचयुगलसंघर्षमसृणिते भुजान्तरे क्षणं कृत्वा वत्स, दिष्ट्या तादृशमहावीरकदम्बकालरात्रिकल्पाद्भारतसमराद्वृत्तसाया इन्दिरादेव्याः सौभाग्यादेवोर्वरितं जानामि । भवतु तावत् । कथयैतत्—कच्चित्कुशली यादवेषु कौरवेषु च सुराजन्यमार्गप्रवृत्तेष्वन्धककुलशिखामणिरुग्रसेनो

---

चेत्याचन्दे' इत्यमरः । 'सुरतक्रीडा निधुवनमायोजनमाहुरर्थविदः' इति हारावली । **तव कुचाभोगेनेवेति** । चन्द्राचलः कनकाद्रिः । सरलता सारल्यम् । पक्षे हारलता । मदो गर्वो हर्षो वा । पक्षे मयालिङ्गितः । राजा चन्द्रः । श्रियो नेता लक्ष्मीनायकः । गोत्रा भूमिः । सुरापानेन जातं यज्जन्यं युद्धम् । वारुणीं पीत्वान्योन्यकलहेन यादवा मृता इति पुराणम् । पक्षे राजन्या राजानस्तेषां मार्गः 'युद्धे चाप्यपलायनम्' इत्यादिरूपः । अन्धका यादवभेदाः । 'सजातीयगणे गोत्रे

धृतराष्ट्रश्च । देवकीनाशस्पृहास्थानं कंसो युधिष्ठिरश्च । सुबलाङ्गप्रणयी अनिरुद्धः कर्णश्च । तोषितसाम्बः प्रद्युम्नो गाण्डीवधन्वा च । उल्लसद्-निरुद्धकामो बलभद्रो दुर्योधनश्च । स्वगुणश्रवणतोषितकर्ण उद्धवः शकुनिश्च । सदानपगतसत्प्रीतिः कृतवर्मा भीमसेनश्च ।

अद्य मेऽभूद्वराहश्रीः श्रीनिवास त्वदीक्षणात् ।
बहुना किं त्वदाश्लेषैर्धन्या क्रोडस्थितिश्च मे ॥ २४ ॥

इति बद्धालापः क भवानित्यादि पूर्वोक्तमेव स्तब्धतारं चालितमौलि नासाग्रस्थापिताङ्गुलिकमाम्रेडयन् तेनापि क्वचिन्मौनमुद्रया क्वचिदन्तर्व्यथापिशुनशुष्कहासेन क्वचित्कण्ठरवेणापि नरकवधवर्जं स्ववृत्तस्य ख्यापयित्रा लक्ष्मीनेत्रा सह कस्मिंश्चित्प्रदेशे क्षणमासांचक्रे ।

अथ श्रीनिवासोऽपि विनयबहुलया तद्वाचाभिनन्दितो भगवन्मायादंष्ट्रिन्,

सरसा विशदा क्रोडीकृतसारगुणा तनुश्च वाणी च ।
नानार्थाय प्रभवति कस्य न दृष्टा श्रुता वा ते ॥ २५ ॥

---

गेहेऽपि कथितं कुलम्' इति सुधा । देवेति संबोधनम् । कीनाशाः कर्षकाः । 'कृतान्ते पुंसि कीनाशः क्षुद्रकर्षकयोस्त्रिषु' इत्यमरः । शोभनो बलो बलदेवः । अङ्गजः प्रद्युम्नः । पक्षे सुबलराजपुत्रः शकुनिः । 'अङ्गजो मन्मथे पुत्रे' इति रत्नमाला । साम्बो जाम्बवतीसुतः । पक्षे शिवः । अनिरुद्धकामौ यादवभेदौ । पक्षे निरर्गलाभिलाषः । 'इच्छामनोभवौ कामौ' इत्यमरः । दानपोऽक्रूरस्तद्गतसत्प्रीत्या सहितः । पक्षे सदेति भिन्नं पदम् । अनपगता सत्प्रीतिर्यस्य । भीमोऽच्छिन्नभक्त इति माध्वराद्धान्तः । वरं च तदहश्च वराहस्तस्य श्रीः । क्रोडं भुजान्तरमिति स्तुतिप्रकारः । किटिसंपदिति दैवाद्ध्रियमाणकथनपरोऽप्यर्थः । नरकासुरस्य वराहपुत्रत्वात्तद्वधवर्जमित्युक्तम् । नेत्रा नियामकेन । **सरसेति** । शरीरपक्षे भूसहिता । वाणीपक्षे शृङ्गारादिरसयुक्ता । 'विशदः पाण्डुरे व्यक्ते' इति हैमः । वराहत्वेन संपद्यमाना सारगुणा चेति कर्मधारयः । पक्षे कवलीकृतश्रेष्ठ-

किं च। देव, अत्र कंचित्कालं वस्तुमिच्छामि तद्भवतो भूमिं कामये इत्यकथयत्।

तच्छ्रुत्वा किमयं प्रभोर्वराहदेवस्य महिषीं विश्वंभरादेवीं स्वीकर्तुमिच्छतीति किंचित्कोपशोणितेक्षणे पोत्रिकदम्बे विलज्जमानायां धरादेव्यां वराहदेवेऽपि दर्शंदर्शं देवीवदनं दरदर्शितमन्दहासे "श्रीनिवास, मन्मनीषितमप्येतन्न केवलमेकामेव धात्रीं किं त्विमां बकुलमालाभिधानां धात्रीं च स्वीकुरु कुरुकुलप्रणयिन्, आदौ भक्तैर्मद्दर्शनादिमानः कार्यः। वत्स, एतदपि जानामि नावयोरन्तरमिति तथापि कालः कलिरागतः। त्वमपि स्तोके जले न मज्जसि तदपि ज्ञातपूर्वमेव। यन्मात्स्ये वामने चाप्यवतारे स्वल्पं स्थानं प्राप्याक्रान्तवानसि सकलमपि भुवनतलम्। नोद्धाट्यं मर्म परेषाम्। अथ वा किं नः कार्यं जरठानां तथापि मर्यादा कापि वरम्" इति वदति 'यदाज्ञापयन्त्यार्यचरणाः' इति दर्शितविनये वासुदेवेऽतिक्रामति घटिकाद्वये वियन्मध्यमारूढे तमःकुलचित्रभानौ चित्रभानौ

जाताकस्मिकमेघरावमतिभिः संभावितः केकिभि-
र्निर्घातभ्रमगाढलग्नवनितैरानन्दितः किं नरैः।

---

गुणा। दृष्टा तनुः श्रुता वाणीति विवेकः। **किंचेति**। भूदेवीमितिः सर्वेषां, भूरिति श्रीनिवासस्याभिप्रायः। **तच्छ्रुत्वेति**। 'धात्री स्यादुपमातापि क्षितिरप्यामलक्यपि' इत्यमरः। स्तोके जले न मज्जसीति लोकोक्तिः। मत्स्यावतारे जलतलं वामनावतारे लोकतलमिति विवेकः। 'भुवनं लोकतोययोः' इति ध्वनिमञ्जरी। 'स्वरूपाधूर्ध्वयोस्तलम्' इति जगद्धरः। अनेन मत्स्यादीनामैक्यमुक्तं भवति। 'जीवस्थानं भवेन्मर्म' इति हलायुधः। 'उत्तमानां स्वरूपं तु पादशब्देन भण्यते'। 'मनाक्प्रिये वरं क्लीबे केचिदाहुस्तदव्ययम्' इति सुधा। **जाताकस्मिकेति**।

श्रीमत्पन्नगशैलराजवसतेः क्रोडस्य लक्ष्मीपते-
र्नादब्रह्ममयो ललास नितरां मध्याह्नभेरीरवः ॥ २६ ॥

ततश्च यथास्थानं सवकुलां धरां स्वीकृत्य प्रापतुः ।

अथ विश्वंभरया पृष्टतद्वृत्तान्तो वराहः कथयामास । शृणु देवि सरसे रसे, सावधानम् । स्पर्शनानन्दभाक् अचलराजसंपद्धरः भूभृत्कर-प्रसारमहितः अखण्डचक्रश्रियं दधानः तव कुचाभोग इव न्यवसच्चोल-मण्डलं चोलो नाम महीपतिः ।

यस्मिन्विलसति लोचनलोभनीयरम्याकृतौ सन्मालापरिगते सुवृत्ते अत्युन्नतधर्मशालि तव कुचमण्डल इव राजनि अहमिवानिमिषश्रियं दधानः सात्त्विकभावमापन्नः सकामः सकलोऽपि लोकः । एवं स्थिते क-दाचित्कापि लसच्छृङ्गारोचिताकारा सुरभिसुमनोहारिणी गोपालबालिका-स्वसमानां कामपि गामानीय विक्रीतवती । स राजा तां रोहिणीं सत्यपि

---

स्वरूपार्थे मयट् । **ततश्चेति** । श्रीनिवासपक्षे बकुलमालानामिका स्त्री तया सहितां धात्रीं वासार्थं क्षितिम् । वराहपक्षे तन्नामकपुष्पमालासहितां धरादेवीम् । **शृण्विति** । 'स्पर्शनो मारुते स्पर्शदानयोः स्पर्शनम्' इति विश्वः । अचला या राजसंपत् । पक्षे अचलराजो मेरुः । राजसु राजग्राह्यद्रव्यप्रसरणेन । पक्षे वराहपाणिप्रसारेण । चक्रं राष्ट्रम् । पक्षे पुमांश्चक्रवाकः । चोलो देशभेदः । पक्षे कूर्पासः । **यस्मिन्निति** । 'सन्साधौ धीरशस्तयोः । मान्ये सत्ये विद्यमाने त्रिषु' इति सुधा । 'मालापङ्क्तौ पुष्पादिदामनि' इति भास्करः । **अहमिवेति** । देवसंपदम् । पक्षे निर्गतनिमेषसंपदम् । अनेनाधिकासक्तिरुक्ता । सात्त्विकभावः सत्त्वगुणसंबन्धिधर्मः । पक्षे स्तम्भप्रलयरोमाञ्चादिः । **कदाचिदिति** । लस-च्छृङ्गारेति उचिताकारेति पदद्वयम् । पक्षे लसच्छृङ्गेति रोचिताकारेति पदद्वयम् । वसन्तपुष्पमालया हारवती । पक्षे धेनुषु मनोहराम् । 'सुरभिर्गवि च स्त्रियाम् । वसन्तचैत्रयोः पुंसि त्रिषु सौम्यसुगन्धयोः' इति रत्नमाला । **स राजेति** । भूपः ।

महिषीवर्गे पुत्रार्थमचीक्लृपत् । सा च गौश्चिरंतनेन गोपेन पाल्यमानाप्यत्युन्नतं भूभृच्चक्रवर्तिकुमारं शेषाचलमाश्रित्य पांसुलेवाक्षीरा वनमायाति स्म । अन्यदा तु राजदण्डभीत्या वल्मीके क्षरत्क्षीरामाराद्विलोक्य तां धेनुं परशुना जामदग्न्य इव क्षत्रियततिमखण्डयत्स गोपालः । सापि कुहनाधेनुर्योगिराज इव कालजवं तं कुठारप्रहारं यावद्विफलयति तावदेव कल्याणी, किं कथयामि वत्स, वासुदेवस्यौदुम्बरक्षीरार्ककार्पासगवेषणदशा संवृत्ता । तदप्याकर्णय यत्परस्ताद्वृत्तमिति ।

ततश्च तव गेयमिव तालप्रमाणोज्ज्वलं रक्तं पश्यतो गोपस्य सावस्था जाता या मुचुकुन्दस्वापभङ्गकारिणो यवनस्य, अथवा सरससाहित्यनिन्दकस्य दुष्कवेः ।

अथ ज्ञातवृत्तान्तश्चोल आगत्यालोचयामास । अहो कोऽयमद्भुतदर्शनः सुप्रतीकोऽपि सार्वभौम इव दृश्यते । कल्पोऽपि पुंनाग इव राजते । सुग्रीवोऽपि बलाहकस्यानुकरोति । नीलोऽपि नलसुन्दरः । तिष्ठ-

---

गाम् । सैरिभी समूहः । पुत्राणां क्षीरपानार्थमिति तत्त्वार्थः । चन्द्रः, नक्षत्रभेदः, राजपत्नीगणः, सुतोत्पत्त्यर्थमिति चमत्कारः । 'गौस्तारा कण्ठरोगश्च रोहिणी' इति रत्नमाला । 'महिषी नृपपत्न्यां च सैरिभ्यामोषधीभिदि' इति विश्वः । सा चेति धेनुः । धेनुपेन । मेरुपुत्रमिति तत्त्वार्थः । चमत्कारस्तु भूमिः, राजा, महाराजपुत्रमिति । अक्षीरा अदुग्धा । पक्षे अक्षिणी ईरयति प्रेरयतीति तथोक्ता । 'गौर्नाके वृषभे चन्द्रे वाग्भूदिग्धेनुषु स्त्रियाम् । द्वयोस्तु घृष्टिदृग्बाणस्वर्णवज्राम्बुलोमसु' इति रत्नमाला । 'स्वातीवे' इत्यमरः । **अन्यदा त्विति** । कालजवं मृत्युवेगम् । **ततश्चेति** । 'वृक्षभेदः स्मृतस्तालस्तालः करतलध्वनिः' इति ध्वनिमञ्जरी । **अहो कोऽयमिति** । सुप्रतीकः शुभाङ्गो दिग्गजश्च । सार्वभौमो राजा दिग्गजश्च । कल्पपुंनागौ वृक्षभेदौ । विभुः पुरुषश्रेष्ठश्च । 'न्याय्ये तुल्ये प्रभौ काले देववृक्षे च कल्पवाक्' इति ध्वनिमञ्जरी । 'अश्वास्तु शैब्यसुग्रीवमेघपुष्पबलाहकाः' इति श्रीभागवतम् । शोभनकण्ठो मेघश्च । नीलनलौ वानरभेदौ । कृष्णवर्णो राजभेदश्च । 'नीलो वर्णे मणौ शैले निधिवानरभेदयोः । नीलौषध्यां लाञ्छने च' इति

स्वेतत् । कोऽयमिति जानामि । किमयं प्रतापनिधिः सप्तार्चिः । नह्ययमकृशानुभावं धत्ते । स्निग्धच्छायः सप्ताश्वो भवेत् । अहह निशोल्लसदम्बरपरिष्कृतोऽयम् । भवतु यो वा को वा । कथमीदृशस्यैतादृश्यवस्था । किमिति संभाषयामि । यदि तमेव पृच्छामि नायं प्रज्ञावतां पन्थाः । अथवानालोकितकेन यथागतं पृच्छामि तदितरा का निस्त्रिंशता । अथवा मदीयगोक्षीरमन्यायेन पिबतस्तवोचितमेव जातमिति भणामि । तद्वीथीपिशाचस्य गृहानयनप्रकारः । इत्येवं विविधप्रकारमालोच्य कथं कथमपि मधुराधिपोऽयमिति ज्ञात्वा निश्चित्य प्राप्तकालप्रतिक्रियेयमिति यावद्दण्डवत्प्रणन्तुमिच्छति तावदेव तं दृष्ट्वा देवोऽपि प्रकोपस्फुरदधरविनिर्गच्छद्रूक्षाक्षराणि श्रावयांचकार । 'रे रे चोलेन्द्र, साधु रे साध्वनुष्ठितं भवता । नायं तवापराधः । पापीयान् श्रीमदस्त्वामुत्तरलयति । प्रायस्त्वद्विधा बहवो महतामवज्ञानात्स्वानुरूपं फलमापुः । तथाहि । निमिमदनयोर्विदेहभावः । चित्रकेतोर्नहुषस्य चाहित्वम् । जयविजयनलकूबरादेः पलाशित्वम् । त्रिशङ्कोरिन्द्रद्युम्नस्य च मातङ्गता । अतस्त्वमप्येवं भवे'ति । तच्छ्रुत्वा स भूभृत्तद्वाग्वज्रेण ताडितो निःसंज्ञो निपपात । देवि, वलभतुच्छीकृतानन्तेऽनन्ते, चित्रमेतत् ।

---

हैमः । **कोऽयमिति** । प्रकृष्टतापनिधिः । 'कृशानुः पावकोऽनलः' इत्यमरः । पक्षे शौर्यनिधिः । अकृशश्चासावनुभावः प्रभावश्च । 'सप्ताश्वहरिदश्वोष्णरश्मयः' इत्यमरः । 'छाया सूर्यप्रिया कान्तिः प्रतिबिम्बमनातपः' इत्यमरः । 'अहहेत्यद्भुते खेदे' इति च । 'निशा निशीथिनी रात्रिः' इति च । 'निशाह्वा काञ्चनी पीता हरिद्रा' इति च । अम्बरं व्योम वसनं च । निस्त्रिंशो नृशंसः । 'हीनसंबोधने तु रे' इत्यमरः । **निमिमदनयोरिति** । निमी राजभेदः । तस्य वसिष्ठस्यापमानाद्देहाभावत्वं मदनस्य रुद्रावमानादनङ्गत्वमिति विवेकः । अग्रेऽप्येवमेव । इयं सर्वापि कथा भागवताज्ज्ञेया । 'अहिर्वृत्रासुरे सर्पे' इति विश्वः । 'पलाशी वृक्षरक्षसोः' इति विश्वमेदिन्यौ । मातङ्गो गजः । पक्षे चण्डालः । अन-

कुठाराहतिरेकस्य गोपस्यान्यस्य पञ्चता।
पश्य पश्य वरारोहे तदन्यस्य पिशाचता॥ २७॥
चक्रिणा श्रीधरेणायं वल्मीकस्थानवासिना।
तेन चोलनरेन्द्रोऽपि क्षणादुद्वेजितः प्रिये॥ २८॥

अथ तस्मिन्मोहमापन्ने भर्ता जीवनदानेनापि सत्कार्य इति जलसेकादिना कृततत्प्रबोधप्रयत्ने कस्मिंश्चिन्मन्त्रिणि देव, प्रकृत्या कया धुतनयोऽयं नृसिंहेन त्वया दण्ड्य इति चित्रसमुद्रोदरमज्जनं चेतसः, दाहशक्तिश्चन्द्रिकायामपि दृष्टा भवेत्, कठिनमपि हैयङ्गवीनमिति सचेलाञ्चलप्रसारं प्रणमति श्रीनिवासेऽपि किंचिन्मन्दीभवत्कोपावेशो सकक्षास्फालनं नृत्यति गगनतलावलम्बिनि कलहदर्शननिर्निद्रे मुनीन्द्रे अयमस्याभिनवपिशाचस्य चोलदेवस्य वासार्थं कॢप्त इति प्राक्स्थिताक्रन्दमुद्भूतकुटुम्बकं जीर्णशाल्मलितरोर्निर्वासयति वेतालभृत्यगणे राजा चोलोऽपि कथमप्युद्बुद्धः साञ्जलिबन्धं वाचमुवाच।

अम्बाविमुखो भीष्मश्चिरजीव्यप्रमदकः प्रजारहितः।
पात्रं नासीत्किं ते करुणायाः किं तथाविधो नाहम्॥ २९॥

---

न्तमाकाशमनन्ता भू देवी। **कुठारेति**। हेतुकार्ययोर्भिन्नाधिकरणत्वमिति चित्रतापादनप्रकारः। तत्त्वार्थस्तु—एको गोपः कृष्णः। अन्यो गोपो धेनुपः। तदन्यो गोपश्चोलभूपः। अनेन चोलस्य पिशाचत्वमित्युक्तं भवति। अनेनैवशब्दार्थोऽपि विवृतः। **चक्रिणेति**। चक्री सर्प इति चमत्कारः। नारायण इति तत्त्वार्थः। श्रीर्विषम्। पक्षे रमा। 'नरेन्द्रो वार्तिके राज्ञि विषवैद्येऽपि' इति विश्वः। **अथेति**। 'जीवनं वर्तने नीरप्राणयोः' इति सुधा। कयाधुः प्रह्लादमाता। नृसिंहो नारायणावतारभेद इति चमत्कारः। तत्त्वार्थस्तु कया प्रकृत्या स्वभावेन धुतनयः कम्पितनीतिः। न कयापीत्यर्थः। मनुष्यश्रेष्ठः। हैयङ्गवीनं नवनीतम्। **अम्बेति**। क्रूरो माता काकसमानः संतोषरहितः प्रकर्षेण जाराणां हित इति निन्दा। शान्तनवः काचन वनिता दीर्घजीवी स्त्रीरहितः पुत्ररहित इति तत्त्वार्थः। अम्बाभिधाना काचन भीष्मं चकमे स तु तां नाङ्गीचकारेति श्रीभागवतम्। 'चिरजीवी

अथवा किं प्रार्थनया । महतां शापेन जगत्यस्मिन्को वा नष्टः । इन्द्रद्युम्नस्य पुंनागत्वं नलकूबरस्यार्जुनत्वं नहुषस्य चक्रित्वमिव ममापि देवस्य शापः कामप्युन्नतिं नयेदिति ।

ततश्च श्रीनिवासोऽपि श्लेषकाव्यबन्ध इव क्षणं कठिनस्वभावो द्राक्षामधुरां मधुराधिपो वाचमुच्चारयांचकार—भो भो महाराज चोलेन्द्र, रोषाधीनचेतसा वृथा शप्तोऽस्मि । धिग्धिक्क्रोधाधीनचेतसं नरम् । पश्य पश्य, कश्चन क्रोधनः स हि पुरस्कृतक्षय एव भवति । अस्त्वेतत् । कंचित्कालं सफलितमद्वचनो भव । अचिरादेवैतस्मान्मोक्षो मोक्षश्च ते भविष्यतीति । ततः परं यद्वृत्तं तद्भवती जानात्येवेत्यभिधाय स्वोचितकार्याय तद्दत्तहस्तावलम्बोऽत्रिरिवोदतिष्ठत् ।

इतश्च श्रीनिवासोऽपि वनादागत्य सह बकुलमालया अहो निष्कारणा मैत्री निर्व्याजा प्रीतिः लोकोत्तरं सौजन्यं निरपेक्ष उपकारक्रम इत्यादिव-राहगतालापभूयिष्ठं व्याहरन्नेव—

ललितकमलशोभे पर्वतेन्द्रस्य पादे
　गमयति कृतसक्तिर्वत्सराणां शतानि ।
नरमृगपतिसूरेस्तादृशो वेङ्कटेशः
　कविरिव विगतान्यव्यापृतिः श्रीनिवासः ॥ ३० ॥

इति श्रीमद्वेङ्कटेशकवेः कृतौ श्रीनिवासविलासे पूर्वभागे प्रथम उच्छ्वासः ।

---

चैकदृष्टिः' इत्यमराधिकपाठः । **अथवेति** । पुरुषश्रेष्ठत्वमिति चमत्कारः । पुरुषगजत्वमिति तत्त्वार्थः । अर्जुनः पार्थः । पक्षे वृक्षभेदः । चक्री नारायणः । पक्षे सर्पः । **भो भो इति** । क्रोधनः क्षयश्च वत्सरभेदः । कोपनः नाश इति तत्त्वार्थः । तया दत्तो हस्तावलम्बो यस्य सः । पक्षे स चासौ दत्तः ऋषिभेदश्च स एव हस्तावलम्बो यस्य । नारायणावतारो दत्तोऽत्रिपुत्र इति भागवतम् । **ललितेति** । कमलो मृगः । पादः प्रत्यन्तपर्वतः ॥ इति श्रीधरणीधरविरचितायां श्रीनिवासविलासचम्पूटीकायां प्रथम उच्छ्वासः ॥

---

द्वितीय उच्छ्वासः ।

अथ कदाचित्क्वचित्सुतमालालोकनजातानन्दः क्वचित्स्थाने लसत्पृथुलकुचतरुण्याहितदृष्टिः क्वचिन्मातुलजातासूयः क्वचित्सुतालसत्प्रीतिः क्वचिन्मानिततापसगणः भवन इव वनेऽपि विहरन् श्रीश्रीनिवासः कस्मिंश्चित्प्रदेशे अतिधवलशरीरकान्तिं अनिलवेगविप्रकीर्णकपिशजटाकलापं किञ्जल्कपुञ्जोद्भासितमिव सिताम्भोजवनकान्तिसमूहं कृष्णाजिनावगुण्ठितकलेवरं प्रलम्बवधमुदितमुरान्तकालिङ्गितमिव रेवतीजानिं कृतहरिचन्दनाङ्गरागं गङ्गाजलस्नापितमिव शिवशिरःशेखरचन्द्रकिशोरं सुतारोद्भासमानया दृष्ट्या कान्त्या च महत्या वीणया तपस्यया च राजमानम्, किं च वसन्तमिव सुरभिं ग्रीष्ममिव महातपस्थितिभासुरं वर्षावासरमिव नभस्यागमनं कलयन्तं शरत्समयमिवानुभूतविधुप्रसादं हेमन्तमिव सदाहिमहितं शिशिरमिव पुरस्कृतमाधवम् इत्यनुभूतसर्वर्तुकालोचितचरित्रमप्यज्ञातर्तुकालोचितचरित्रं पाण्डुमप्यर्जुनं आत्मभूस्पृहणीयमपि निष्कामं पर्वतयुक्तमप्यनाश्रितभूभृतं क्षमावासमप्यम्बरचरं अपापमपि नारदाभिधानं कंचन तपोनिधिं नयनातिथीचकार । अचिन्तयच्च ।

---

**अथेति** । शोभनास्तमालाः । पक्षे सुतपङ्क्तिः । लसन्तः पृथवो ये लकुचतरवो यस्मिन्निति स्थानविशेषणम् । पक्षे लसन्तौ पृथुलौ कुचौ यस्यास्तस्यामाहितदृष्टिः । 'सर्पभेदेऽथ धत्तूरे मातुर्भ्रातरि मातुलः' इति रत्नमाला । तालो वृक्षभेदः । पक्षे सुता पुत्री । तापसा वृक्षभेदाः । **कस्मिंश्चित्प्रदेश इति** । तारा कनीनिका । पक्षे क्लीबे रजतम् । 'महती वल्लकीभेदे प्राज्येऽपि स्यान्नपुंसकम् । तत्त्वभेदे पुमाञ्छ्रेष्ठे वाच्यवत्' इति सुधा । तपस्या तपः । 'सुरभिः स्यान्मनोज्ञेऽपि' इति रत्नकोशः । आतपः । 'नभः खं श्रावणो नभाः' इत्यमरः । विधुर्विष्णुः । पक्षे चन्द्रः । 'प्रसादोऽनुग्रहस्वास्थ्यदयाकाव्यगुणेषु' इति विश्वः । महितं पूजितम् । पक्षे हिमस्य हितम् । माधवः कृष्णः । पक्षे वसन्तः । 'ऋतुः स्त्रीपुष्पकालयोः' इति, 'पाण्डुः कुन्तीपतौ सिते' इति च हैमः । आत्मभूर्मदनो ब्रह्मा च । कामो मदन इच्छा च । पर्वतोऽद्रिः ऋषिभेदश्च । भूभृत्पर्वतो राजा च । 'क्षमा क्षोण्यां तितिक्षायां' इति भास्करः । अपापोऽपगतजलः । नारदो जलदः ।

न रागं मानसे धत्ते पक्षपाती च नाभवत् ।
हंसोऽयं कश्चिदपरो घनसाररुचिर्यतः ॥ १ ॥

ततः किंचिद्विहस्य यथाविधि संपूज्य प्राह । स्वायंभुव कलहोत्पत्तिनाटकसूत्रधार, कुतो भवान् इति । सोऽप्यवदत् । दक्षिणं पाणिमुन्नमय्य

सूर्यालोके निष्प्रभोऽयं चन्द्रोऽर्को मन्दनन्दनः ।
जिह्वां करालीं वहति वह्निः केनोपमीयसे ॥ २ ॥

अस्त्वेतत् । भवद्दर्शनकाङ्क्षया वैकुण्ठलोकमगमम् । यत्र च शोभमानमुक्तावलयः राजमानातनुभाः सरससरसः असदृशः भूभागा वनिताजनश्च । यत्र च कुमुद उत्तरद्वारपालः सद्द्विषः पर्यङ्करूपः शेषः कलितमहापदो देवगणः न जनाः । गत्वा च । अहो दैवाद्योग्ययोरेव

---

**न रागमिति** । हंसः पक्षिभेदः । पक्षे संन्यासीति तत्त्वार्थः 'मानसं सरसि स्वान्ते' इति विश्वः । 'रागोऽनुरक्तौ मात्सर्ये' इति च । पक्षाभ्यां पातः पतनम् । पक्षे दोषभेदः । घने सारा श्रेष्ठा रुचिरासक्तिर्यस्य । पक्षे कर्पूरकान्तिः । 'अथ कर्पूरमस्त्रियाम् । घनसारश्चन्द्रसंज्ञः' इत्यमरः । 'हंसो विहंगभेदे स्यादर्के विष्णौ हयान्तरे । योगिमात्रादिभेदेषु परमात्मन्यमत्सरे ॥ निर्लोभे नृपतौ चैव शरीरमरुदन्तरे ।' इति विश्वः । लोकसाधारणहंसलक्षणाभावादपरो लोकविलक्षण इत्युक्तम् । **सूर्येति** । सूरीणां ज्ञानिनामालोके दर्शने इति निन्दा । भानूद्योत इति तत्त्वार्थः । 'आलोकस्तु पुमान्द्योते दर्शने बन्दिभाषणे' इति सुधा । मूढहर्षकः । पक्षे शनिः पुत्रो यस्य । 'नन्दनं वासवोद्याने पुत्रे ना हर्षके त्रिषु' इति रत्नमाला । कराली क्रूरा । पक्षे सप्तसु जिह्वासु काचन तच्छब्दवाच्या । 'काली कराली च मनोजवा च' इति श्रुतिः । **अस्त्वेतदिति** । आवलिः । पक्षे वलयः । अतनुभा अनल्पकान्तयः । पक्षे मदनकान्तिः । सरसानि सजलानि सरांसि जलाशया येषु । पक्षे अत्यन्तसश्रृङ्गारः । सदृक्शब्दः । पक्षे सदृशशब्दः । एकवचनबहुवचनश्लेषः । कुमुदस्तन्नामकः । पक्षे कुत्सितसंतोषाः । सत् विप्रं यस्य । पक्षे सतो द्विषो द्वेषिणः । कलितं महत्पदं स्थानं येन । पक्षे संबद्धमहाविपदः । नेति सर्वत्र संबध्यते । पूर्वोक्त एवालंकारः । **गत्वा चेति** । 'लोकस्तु भुवने जने' इत्यमरः ।

सकललोकोत्तरयोः स्पृहणीयजयविजययोः भासमानबलप्रबलयोः विदुरप्राप्ययोः वैकुण्ठाभिधानयोस्तव त्वल्लोकस्य चेति द्वयोः संयोगः संवृत्त इति सानन्दः तत्राशृणवं भवान्भूलोकं गतवानिति। ततश्चाहमन्विष्येतस्तत आनन्दकाननं गतोऽस्मि। यत्र च।

सदापापिदुरापा सा चन्द्राभापीनलक्षणा।
प्रौढाप्याख्यातमौग्ध्या सा चित्रचर्या तरङ्गिणी॥ ३॥

अपि च।

करेहिचक्रं कलयञ्श्रियालिङ्गितकंधरः।
विनायकप्रियः शंभुर्माधवश्च विराजते॥ ४॥

तत्राप्यदृष्ट्वा मिलितोभयवाहिनीभरसंमर्दनर्तनलसत्कबन्धे प्रयागे कुरुक्षेत्रे च हरिपदाङ्किते गयाक्षेत्रे हिमवच्छिखरवरकदम्बे च विफलित-

---

'उत्तरं प्रतिवाक्ये स्यादूर्ध्वोदीच्योत्तमेऽन्यवत्। उत्तरस्तु विराटस्य तनये दिशि चोत्तरा॥' इति विश्वः। जयोऽर्जुनस्तस्य विजयः। बलो बलरामस्तेन प्रबलः। पक्षे 'जयं च विजयं तथा। बलं च प्रबलं चैव सुनन्दं नन्दमेव च। कुमुदं कुमुदाक्षं च द्वारपालांश्च पूजयेत्॥' इति स्मृतिः। विदुरो वैचित्रवीर्यः। पक्षे 'ज्ञाता तु विदुरो विन्दुः' इत्यमरः। आनन्दकाननं काशीक्षेत्रम्। **सदापापीति**। सदापा दुरापेति शब्दतो विरोधः। पापिनां दुरापेति परिहारः। अत्रापिशब्दस्य सार्थक्यात्कश्चिच्चमत्कारः। एवमग्रेऽपि। चन्द्रः सुधांशुः। इनः सूर्यः। पक्षे पीनं लक्षणं यस्याः। प्रौढा प्रगल्भा। मौग्ध्यं मुग्धभावः। पक्षे प्रौढैराप्या प्राप्या। ख्यातसौन्दर्येति। 'मुग्धः सुन्दरमूढयोः' इति रत्नमाला। **कर इति**। अहिचक्रं सर्पसमूहम्। श्रीर्विषम्। विनायको द्वैमातुरः। पक्षे हीति भिन्नं पदम्। सुदर्शनायुधम्। रमा। गरुडः। 'तरङ्गिण्यां च सेनायां वाहिनी' इति जगद्धरः। 'कबन्धं सलिले रुण्डे कबन्धो राक्षसान्तरे' इति विश्वः। हरिः सिंहः। पक्षे नारायणः। 'यमानिलेन्द्रचन्द्रार्कविष्णुसिंहांशुवाजिषु। शुकाहिकपिभेकेषु हरिर्ना कपिले त्रिषु॥'

प्रयासः केवलं द्विजातिसुलभां दक्षिणाशां लक्षीकृत्य प्रवरोपशोभितामपि विप्रवरोपशोभितां गोदावरीं प्राप्य

नमामि मानदां गोदां नयनायनतां गताम् ।
नमद्धामनताङ्गीं तां नवपावनभां शुभाम् ॥ ५ ॥

इति पद्मबन्धेन स्तुत्वा च ततः केनचिद्दिवसेन गमनकर्मीकृतपाण्डुरङ्गक्षेत्रस्तत्र भवदीयां मूर्तिम्

नतवत्सल राजीवनेत्र मामव यादव ।
नवजीवनदाराव वरादानवजीवन ॥ ६ ॥

इति च्छत्रबन्धनेन स्तुत्वा । अथासन्नप्रसवधेनुमिवोभयतोमुखीं कृष्णावेणीमुडुपेनात्रिरिव तीर्त्वा ऋणं पितॄणां तेनैव क्रमेणानेकसुरभिमहिष्यादिभूषितान्ग्रामान्कृष्णानिवोद्वीक्ष्य उडुपवंशावलम्बकदाशार्होत्तारितान्नदीवर्गान्पाण्डवानिवावगाह्य मधुरापुरमिव अन्धककुब्जादिशरणं धर्मशालाकदम्बमभिनन्द्य करवीरपुरं गतवानसि ।

साम्बत्वं मदनस्य शंकररिपोः क्षीराब्धिकन्यागृह-
प्राशस्त्यं कमलस्य तामरसविख्यातिं गतस्याञ्जसा ।

---

इत्यमरः । 'दक्षिणो दक्षिणोद्भूतसरलच्छन्दवर्तिषु । अवामे त्रिषु यज्ञादिविधिज्ञाने दिशि स्त्रियाम् ॥' इति सुधा । प्रवरा नदीभेदः । प्रवरा द्विजश्रेष्ठाः । **नमामीति** । धाम आश्रयः । **नतवत्सलेति** । जीवनदो मेघः । न विद्यते दानवजीवनं यस्मात् सोऽदानवजीवनः । कृष्णा उभयतोमुखीति पुराणम् । उडुपः प्लवः । पक्षे चन्द्रः । सुरभिर्गौः । महिषी सैरिसी । पक्षे मनोज्ञरुक्मिणी । दाशार्हः कैवर्तश्रेष्ठः । पक्षे कृष्णः । अन्धका नेत्रहीनाः । पक्षे यादवभेदाः । कुब्जा भुग्नपृष्ठाः । पक्षे कुब्जा काचन वनिता । **साम्बत्वमिति** । साम्बः शिव इति लक्ष्मीस्तुतिः । मातृसहित इति तत्त्वार्थः । तामिति भिन्नं पदम् । अरसा अश्टङ्गारा । पक्षे तामरसम् । वै इति भिन्नं पदम् । 'कुण्ठो मन्दः क्रियासु यः' इत्यमरः । सभायामा-

भो वैकुण्ठ सभार्यता च भवतो जाता यया साम्बुज-
द्वन्द्वश्रीप्रतिमल्लचारुनयना श्रीर्यत्र गोत्रस्तनी ॥ ७ ॥

तस्माच्च निर्गत्य अनेकपारिजातोद्भासितानि गिरिकूटान्यतिक्रम्योद्यानानि च पश्यन् अनेककासारसंपदो धर्मशाला अभिनन्द्य किरातगृहांश्चासेवमानः अनेकप्रपापालीपरिगताः पानीयशालाः संपूज्य दुर्जनततीश्च मनसा निन्दन् अव्याजरमणीयाः पल्लीरपहसन् वनिताश्च परिहरन् रामसेतुमगमम् । तत्र च ।

ऋक्षाधिराजोद्भवया कालिन्द्या नीलया सह ।
क्रीडन्सिन्धुर्मया दृष्टो द्वारकायां भवानिव ॥ ८ ॥

तरङ्गहस्तैर्मकरीः सुरापगा मुखेऽर्पयन्तं प्रसमीक्ष्य वारिधिम् ।
का वा नदी सोत्कलिका न चास यद्बभूव नारीजनतापि तीरगा ॥९॥

अथ च ।

सीताचक्षुर्भद्रानन्ददमब्धिं निरीक्ष्य सेतुं च ।
त्वद्विरहदूनमपि मे सुखितमिवासीत्तदा तु खलु चेतः ॥ १० ॥

---

र्यता । पक्षे वैकुण्ठः कृष्णः । भार्यासहितत्वम् । **तस्माच्चेति** । 'द्विरदोऽनेकपो द्विपः' इत्यमरः । अरिजातं शत्रुसमूहः । सिंहवृन्दमिति यावत् । 'सामान्यसंघयोर्जातम्' इत्यमराधिकपाठः । पक्षे पारिजाता वृक्षभेदाः । कासाराः । पक्षे असाराः । 'सारो बले मज्जनि च स्थिरत्वे' इति शाश्वतः । 'प्रपा पानीयशालिका' इत्यमरः । पाली प्रदेशः । प्रकृष्टपापपङ्क्तिः । अव्या रक्ष्याः । अजाश्छागाः । **ऋक्षेति** । ऋक्षाधिराजोद्भवा चन्द्रोद्भवा । 'नर्मदा सोमोद्भवा' इत्यमरः । पक्षे जाम्बवती । कृष्णवर्णा कालिन्दी नदीभेदः । पक्षे द्वे अपि महिषीभेदः । **तरङ्गहस्तैरिति** । मकरी जलजन्तुभेद इति तत्त्वार्थः । मकरिका पत्त्रिणीतिचमत्कारः । 'मुखं निःसरणास्ययोः' इति धरणिः । उत्कलिका तरङ्ग इति नदीपक्षे । नारीजनतापक्षे उत्कलिका उत्कण्ठा । आसेति तिङन्तप्रतिरूपकमव्ययम् । **सीतेति** । सीता चक्षुर्भद्रा चेति गङ्गायाः प्रवाहभेदाः । 'सीता चालकनन्दा च चक्षुर्भद्रा' इति भागवतम् । 'सीता

तत्र तु कस्यचित्पान्थस्य वचसा ज्ञातं भवान्पन्नगाचले निवसतीति। ततश्च जातानन्द इत एवागच्छन्मध्येमार्गं कामपीत्यर्धोक्त एव किंचिदारेचितभ्रूयुगुल ईषत्तरलितमस्तकं सामिदष्टाग्ररसनं सपर्वतमुखावलोकनसंजातस्मितं प्रमादमुद्रामभिनीय देव विषयविरसाप्यस्मच्चित्तवृत्तिर्भवत्प्रेम्णाकुलीभवति । अस्त्वेतत् । प्रकृतमनुसरामि । देवस्य चरणयुगुलमपश्यं यदर्थोऽयं प्रयास इति ।

एवमाभाष्यालम्बितमौने तस्मिन्नुत्पादितकौतुके नारदे देवोऽपि देवर्षे, कामपीत्यर्धोक्तस्य संवृतिरियं भृङ्गीसंगीतभङ्गीविवशकुरङ्गीहृदयस्य लुब्धकबाणवेधः । किं च ।

भवद्विदितार्थस्य ममानिवेदनं सा धनिकस्य पात्रादानप्रक्रिया।
क्व गता ते भैष्मीहरणकालीना निर्व्याजकृपा। भण मुनिकुलोत्तंस

"अनारम्भो मनुष्याणां प्रथमं बुद्धिलक्षणम् ।
आरब्धस्यान्तगामित्वं द्वितीयं बुद्धिलक्षणम् ॥"

इति किं न श्रुतं भवता । कुरु कोमलं मनः । मा भवतु शिरीषकुसुममपि कठिनं इति विविधानुनयकोविदः कथं कथमपि तद्वृत्तान्तशेषकथनोन्मुखं चक्रे । सोऽपि सफलप्रायो मे मनोरथसालद्रुम इति निश्चित्याह—

देव, शृणु सावधानमनाः । वारुण्याश्चेतोविलास इव अनन्तमार्गावलम्बिनि मद्देहच्छविकौमुदीभ्रमागतभ्रमद्बालचकोरनिकरपक्षसमीरतरलितवीणागुणक्वणनसमाकर्णनैकाग्रमनसि मय्यागच्छति किंचिन्निकट

---

सीरध्वजापत्यं सती मन्दाकिनी मता' इति ध्वनिमञ्जरी। देव शृण्विति। वारुणी शेषभार्या । अनन्तं गगनम् । पक्षे पुमान् शेषः । 'अनन्तः केशवे शेषे पुमान्निरवधौ त्रिषु । अनन्ता तु विशालायां शारिवादूर्वयोरपि ॥ विश्वंभरागुडूच्योः

एव संजातेऽस्मिन्पर्वते पर्वतः सर्वतः संचारितचक्षुरिक्षुरसासारमधुरां मधुराधिप, वाचमवोचत् । आर्य, इतः पश्यतु भवान् । यदत्र लसच्चक्रः राजज्जलजः व्यालोलवनमालः दिव्यसारसनालीलसत्कमलोद्भासितः गरुत्मत्पक्षिसेवितः सदाशेषभोगिप्रियः इन्दीवरश्यामलकान्तिः अयमयमग्रत एवेत्यर्धोक्त एव जृम्भणारम्भेणाकुलीकृतोऽयं तदन्वहमपि चेदेवं भगवाञ्छ्रीनिवास एव भवेदित्यालोच्योद्घाट्य नयने क्व क्व साध्वातारचन्द्रं जय जीवेत्याशिषाभिनन्द्य गृहाण पारितोषिकं प्रियमावेदयसीति कटिकलितं गोदावरीस्नानसमयतत्तीरविस्मृतपटीभवत्कृष्णसाराजिनबन्धनपट्टसूत्रं तद्भ्रान्त्या केवलमाकाशमेव समर्प्य विस्मृतदेहभावस्त्वमिव राधाकुचकलशदर्शनेनावस्थितः । ततस्तेनापि कथमयमकस्माद्भूताविष्ट इव चेष्टत इति शङ्कितमनसा किंचिदपसृत्य विसयोज्जृम्भमाणतारं वीक्ष्यमाणः यावत्पुरतः पश्यामि तावत्कमपि कासारमपश्यं न भवन्तम् । स च नाम्ना पद्मसर इति । देवेनाप्यौषधिगवेषणकृतबहुपर्यटनेन दृष्ट एव स्यात् । यस्तु अमृतान्धस इव अमानवाः । अस्त्वेतत् । अथ श्लेषवादर्दुर्व्यसनेनानेन वञ्चितोऽहमिति

---

स्यादनन्तं सुरवर्त्मनि ।' इति सुधा । पर्वतो ऋषिभेदः । आर्येति । लसच्चक्रेत्यादि विशेषणसप्तकं पद्मसरःपरत्वेन श्रीनिवासपरत्वेन च ज्ञेयम् । वनमाला जलपङ्क्तिः । पक्षे 'आ पादपद्मं या माला वनमाला' इति कलिङ्गः । सारसनाल्या पद्मनालेन लसज्जलम् । 'नालं नाली पद्मदण्डे' इति सुधा । दिव्यं सारसनं काञ्ची यासां तास्तादृशो या आल्यः सख्यस्ताभिर्लसन्ती या कमला रमादेवी । 'रशना तथा । क्लीबे सारसनं' इत्यमरः । अशेषविलासिप्रियः । पक्षे शेषसर्पप्रियः । यस्त्विति । मानवा नेत्यमानवाः । पक्षे अपरिमितजल इत्येकवचनबहुवचनश्लेषः । 'पत्रं तु वाहने पर्णे पक्षे च शरपक्षिणोः' इति विश्वः । 'कण्ठो गले गलस्थाने समीपेऽपि' इति च । 'कनकं चम्पके हेम्नि धत्तूरेऽपि' इति च । 'पुट-

निश्चित्य तस्य सरसश्चक्रवर्तिन इव जृम्भमाणसहस्रपत्रस्य कण्ठशोभमानकनकमालस्य पुटभेदशोभावहस्य तटनिकटे क्षणमतिष्ठम् । ततः परं यद्वृत्तं तदस्मच्छात्रस्य कलालापस्य कलत्रं कलकण्ठी नाम किंनरी वक्तीत्युक्त्वा विरराम ।

अथ तदाज्ञया आह सा यथार्थाभिधाना कलकण्ठी । अत्रान्तरे देव, कुतोऽपि पार्वतीशरीरमिव चन्द्राभरणभूषितं सुमेरुशृङ्गमिव नक्षत्रमालापरिगतकण्ठं विन्ध्याटवीस्थानमिव मृगराजोल्लसन्मध्यदेशं शेषाचलस्वरूपमिव स्फुरद्राजीवपादं नाटकमिव मनोज्ञाङ्कं मनुकुलमिव लसद्गम्भीरनाभिरहूगणचित्तमिव कलितभरतागमप्रक्रियमृषिकदम्बमिव तत्संगीतज्ञानं नक्षत्रवृन्दमिव चन्द्रमुखं माधवद्विजमानसमिव कुन्तलोल्लासितं यौवतमाविरासीत् ।

तत्र तद्वनिताकदम्बेषु चन्द्रमूर्तिमिव सन्मान्यां सुहस्तश्रवणां चित्रोत्तरानन्ददायिनीं सलक्षणां गौरांशुकां च तथाप्यनाकलितगुरुकलत्रस्पर्शा-

---

भेदस्तु नगरातोययोस्तटिनीमुखे' इति हैमः । अत्रान्तर इति । चन्द्राभरणं स्वर्णाभरणम् । पक्षे पुमान् शिवः । 'सैव नक्षत्रमाला स्यात्सप्तविंशतिमौक्तिकैः' इत्यमरः । कण्ठः समीपप्रदेशः । मध्यमवलग्नम् । 'राजीवं नयने ना तु भेदे हरिणमीनयोः' इति सुधा । 'रूपकांशान्तिकोत्सङ्गे स्थानेऽङ्कः' इति सुधा । नाभी राजभेदः । 'नाभिर्मुख्ये नृपे चक्रमध्यक्षत्रिययोः पुमान् । द्वयोः प्राणिप्रतीके स्यात्स्त्रियां कस्तूरिकामदे ॥' इति सुधा । भरतागमो भरतनाट्यशास्त्रम् । पक्षे रहूगणो राजभेदः तस्योपदेष्टा द्विजजन्मनि भरतभूपालः । इति भागवतम् । सद्भिः सङ्गि इतज्ञानं प्राप्तज्ञानं च । चन्द्र इव मुखं श्रेष्ठो यस्य तत् । माधव इति कश्चिद्द्विजः । कुन्तला काचन स्त्रीति पुराणम् । युवतीनां समूहो यौवतम् । तत्रेति । लक्षणं सामुद्रिकशास्त्रोक्तम् । पक्षे लक्ष्म । गौरं पीतमंशुकं वस्त्रम् । पक्षे शुभ्रकिरणाम् । अंशुरेवांशुकः । 'चेलं वसनमंशुकम्' इत्यमरः । अकृतस्थूलश्रोणीस्पर्शनाम् । अनूढामिति भावः । पक्षे गुरुकलत्रं बृहस्पतिभार्या ।

मननुभूताश्लेषामस्पृष्टकलङ्कां दोषानुबन्धरहितामज्ञाततमःसंबन्धजातविकारां च कामपि कन्यामणीमद्राक्षम् ।

यस्या नारदसदृशः केशपाशो हासश्च देवनागमनोज्ञा वेणी गण्डच्छविश्च अर्धचन्द्रहृद्यं ललाटमण्डलं कटाक्षकदम्बं च सारङ्गधिक्कारि नयनयुगं गमनं च रागोत्तरोऽधरः क्वापि यूनि चेतःप्रसरोऽपि चापापकारिणी भ्रूलता मतिश्च चन्द्रभासुरा मुखशोभा देहच्छविश्च सरलो नासावंशः सखीजनश्च कुण्डली कर्णः रोमावली च रतिसुन्दरं रूपं वयश्च चक्रमञ्जुला नाभिः कुलद्वयी च शङ्खकान्तः कण्ठः पाणिश्च गुरुमनोहरं नितम्बबिम्बं चरितं च हंसकोद्भासिता पदद्वयी सीमन्तकलितसिन्दूररेखा च अनन्तहृदयंगममवलग्नं गुणवृन्दं च विचित्रांशुकाच्छादित ऊरुभागः सर्वावयवसंचयश्च । देव, पश्चाज्ज्ञातं सा कस्यचिद्राज्ञः कन्येति ।

---

'गुरुर्महत्याङ्गिरसे पित्रादौ धर्मदेशिके । जलधौ दुर्जरे चापि' इति हैमः । 'कलत्रं श्रोणिभार्ययोः' इत्यमरः । 'मणिर्द्वयोः' इत्यमरः । दोषा रात्रिः । 'तमांसि गुणतिमिरसैंहिकेयाः' इति त्रिकाण्डशेषः । **यस्या इति** । नारं जलं ददातीति नारदो मेघः । पक्षे—ऋषिभेदः । अत्रोक्तपदार्थानां नारदादीनां शुभ्रत्वादिकं कविसमयसिद्धम् । 'नारं घनरसः पुमान्' इति शब्दार्णवः । देवेति संबोधनम् । नागः सर्पः । पक्षे—देवनाग ऐरावतः । अनेन विरहिणीत्युक्तं भवति । 'नागौ वारणपन्नगौ' इति ध्वनिमञ्जरी । अर्धचन्द्रो बाणभेदः । 'सारङ्गश्चातके भृङ्गे कुरङ्गे च मतङ्गजे' इत्यभिधानचिन्तामणिः । 'रागोऽनुरक्तौ मात्सर्ये क्लेशादौ लोहितादिषु' इति विश्वः । चापस्यापकारिणी समाना । पक्षे—चेति भिन्नं पदम् । अपापकारिणी । चन्द्रं स्वर्णम् । सरल ऋजुः । पक्षे—ऋजुबुद्धिः । कुण्डली ताटङ्कवान् । पक्षे—सर्पः । अभेदस्तूपचारात् । शङ्खा वलयाः । 'शङ्खो ललाटास्थिनि च वलये चाब्जियाम्' इति रत्नमाला । हंसकः पादकटकः । पक्षे—हंसः सूर्यः । अनन्त-

अथ सा राजदारिका ताभिः समानशीलवयोविलासाभिः सखीभिः सह जले यावद्विहरति तावदेव देव, तेनैव मार्गेण सुग्रीवसेनानामिव वलीमुखविभूषितानां मेरुदेवीनामिव नाभिरम्यकुचानां वृत्रगदाघातव्यथितगजेन्द्रवन्नम्रकटकानां त्वच्छन्नुततीनामिव विरसानां पुष्करावर्तवन्नीरदानाम् आर्याणामप्यनुग्रभावाश्रयणीनां क्षीणप्रकाशानामपि वृद्धदशानां विनतानामपि वयःसंतोषरहितानां अदन्तशोभान्वितानामपि तान्तानां जरतीनां कुलमाजगाम ।

ततस्तासां भयेन शीघ्रं निर्गत्य सरसः क्षीरपारावारादिव रमा सहस खीकदम्बा विविधलतावलीमध्यवर्तिनीव कल्पलता कस्मिंश्चिदिन्द्रनीलसोपानशिलातले नीलनीरदमण्डल इव सौदामनी क्षणमतिष्ठत् ।

अथ तासु तत्सखीषु काचिदभिनवमधुपानमत्ता प्राह—'अये काञ्चननिभभर्तृदारिके,

---

माकाशम् । पक्षे—निरवधिः । अंशुकं वस्त्रम् । पक्षे—प्रभा । **अथ सा राजदारिकेति** । वली जराप्रापकचिह्नभेदः । तद्युक्तं यन्मुखम् । पक्षे—वलीमुखाः कपयः । 'वलिर्दैत्यप्रभेदे च करचामरदण्डयोः । उपहारे पुमान्स्त्री तु जरयां श्लथचर्मणि ॥' इति सुधा । केलिरित्याद्या ह्रस्वदीर्घाः स्युः इति वाचस्पतिः । अभिरम्याः कुचा नेति नञ्समासः । पक्षे नाभी राजभेदः । तस्य भार्या मेरुदेवीति श्रीभागवतम् । 'गजगण्डकटी कटौ' इत्यमरः । रसः श्रृङ्गारः । पक्षे—रसा भूमिः । नीरदा निर्गतदन्ताः । पक्षे—मेघाः । पुष्करावर्तो मेघभेदः । आर्या पार्वती । उग्रः शिवः । पक्षे—वर्याः । क्रूरः । 'दशा वर्तिर्दशा वयः' इति हारावली । विनता पक्षिजननी । 'वयः पक्षिणि बाल्यादौ वयो यौवनमात्रके' इति विश्वः । अकारान्ताः । तकारान्ताः । पक्षे—रदहीनाः । म्लानाः । **अथ तास्विति** । काञ्चननिभा भा कान्तिर्यस्याः । सा चासौ भर्तृदारिका चेति कर्मधारयः । ततं प्रसिद्धम् । भोगीन्द्राः सर्पश्रेष्ठा विलासिश्रेष्ठा वा । ओष्ठसंबन्धरहिताः निरोष्ठ्यवर्णाः ।

ललल्लवङ्गिकागन्धविलसत्सत्समीरणः।
ततं तनोति संतोषं भो भो भोगीन्द्रसंततेः॥ ११॥'

इति। तच्छ्रुत्वा तूष्णीं स्थितायां राजपुत्र्याम् अन्यापि काचन प्रत्यग्रदन्तक्षतदूयमानाधरबिम्बा प्राह—'अयि राजनन्दिनि,

निर्यत्किञ्जल्कगन्धान्धसारङ्गगणसङ्गिनी।
कलकण्ठचयाकीर्णा कान्तेयं सरसी सखि॥ १२॥
हंससारसचक्राङ्गचक्रचक्रैरलंकृतः।
नयनानन्दनिलयः कस्य न स्याज्जलाशयः॥ १३॥'

इति। तदपि किमपि ध्यायन्तीव तस्यास्तरलालापश्लोकमिवैतस्या निरोष्ठ्यश्लोकद्वयमप्यनाकर्ण्य स्थिता सा। अथ सा सखी विहस्य पुनः प्राह—'अयि धरानायकशरीरजे, ज्ञातं ते हृदयम्। तं चिन्तयसि यश्च

नीलनीरदसच्छायः शङ्खचक्रगदाधरः।
रत्नाकराङ्गजानाथः कंसनागेन्द्रकेसरी॥ १४॥
राधास्तनन्यस्तकरः स रागिजनाग्रगण्यः किल नन्दजातः।
सकंसहंसान्तकृदण्डजातहरिर्हरिः काञ्चनशैलधीरः॥ १५॥

तद्धितं ते दशायाः अङ्गीकृतं चानेन जनेन तन्नियतिरचिराद्घटयति ते चिन्तितम्। त्यज क्लेशम्। कलय सत्यतां गिरि अस्य जनस्य यत्

शितिजलजसदेशदेहकान्तिर्धरणिधरेन्द्रशरीरजातजानिः।
कलयति स हि हस्तनीरजं ते हरसदृशः किल राजशेखरश्च॥१६॥

---

हृदयमाकूतम्। 'हृदयं जीविते चित्ते वक्षस्याकूते' इति यादवः। **राधेति**। अण्डजातहरिर्गरुडतुरंगः। दशा वयः। **शितीति**। शितिजलजं नीलोत्पलम्। पक्षे—धवलशङ्खः। 'शिती धवलमेचकौ' इत्यमरः। धरणिधरेन्द्रो भीष्मकः। पक्षे—हिमाद्रिः। राजशेखरो भूपश्रेष्ठः कृष्णः। पक्षे—चन्द्रचूडः। 'कुधेड्ज-

यश्च धृतशङ्खचक्रतया धीरतया च अरिदरकरः । राजहंसतयाहं सकलाधीशतालंकृत इत्यहंकृतिरहितः । किं च कलहंसश्च कलहंसानन्दं नाङ्गीचकार । चक्री च नगरस्थितिकलितश्च । नाधिराजजाताश्चर्यचर्यश्च नगाधिराजजाताश्चर्यचर्यश्च । यं चाह्लादितनीलं ज्ञातशीतेतरदीधितितनयाधिकरसश्रियं जयासक्तचेतसं दाशरथिं कृष्णं च जानन्ति । येन नयेन रञ्जितः किल जनः । यस्य च स्त्रीणां चन्द्राचलकान्तिहारी स्तनः आस्यं च । सरलताहृद्या गीः कण्ठस्थली च । किसलयसहजः सदाधरः धरसदृशः स्तनः । यस्य चाधिकलक्षणा गायना जनाश्च । अधिकङ्केलिहृद्याः क्रीडाशैला गिरश्च । अधिकंजातरागोऽधरः लीलाहंसश्च । अधिकाननानन्ददा हरिणाः स्त्रियश्च । अधिकरञ्जकाः साला

---

जानिः’ इतिवत् । यश्चेति । अरि सुदर्शनम् । दरः शङ्खः करे यस्य । पक्षे—शत्रुभयंकरः । राजहंसस्तस्यैवानन्दं नाङ्गीचकारेति विरोधः । चवर्णोऽप्यर्थे । परिहारस्तु—कलहंसो राजश्रेष्ठः । कलहमिति च्छेदः । एवमेवाग्रेऽपि विरोधपरिहारौ ज्ञेयौ । चक्री सर्पो विष्णुश्च । गरं विषम् । नगरं पत्तनम् । गाधिराजजात-नगाधिराजजातेति शब्दतो विरोधः । गाधिराजजातो विश्वामित्रः । नगाधिराजो हिमवान् । ‘आश्चर्ये हिमवानिव’ इति श्रीभागवतम् । यं चेति । नीलः कपिभेदः । पक्षे—नीला कृष्णभार्याभेदः । शीतेतरदीधितितनयः सुग्रीवः । पक्षे—सूर्यपुत्री कालिन्दीति काचन कृष्णपत्नी । जयः प्रसिद्धः । पक्षे—अर्जुनः । येनेति । अत्र विरोधः शब्दतः । परिहारः सुगमः । यस्येति । चन्द्राचलः स्वर्णगिरिर्मेरुः । हारी मनोहरः । पक्षे—सुधांशोर्या अचला कान्तिः । सरलता सारल्यम् । पक्षे—सरो हारः । अधर ओष्ठः । धरः पर्वतः । मुक्तपदग्रासः(?) । यस्य चेति । गायना गीतिविद्याकुशलाः । कलोऽव्यक्तमधुरध्वनिः । तेन क्षण उत्सवः । अधिशब्दोऽधिकार्थः । ततश्चाधिकः कलक्षणो यैस्ते । अधिकलक्षणा इत्यर्थः । ‘अधिकपयःश्रियं’ इति माघप्रयोगः । पक्षे—लक्षणम् । कङ्केलिर्वृक्षभेदः । पक्षे—केलिः । जातराग उत्पन्नरक्तिमा । पक्षे—पद्मानुरागः । काननम् । पक्षे—आननम् । साला वृक्षाः । करञ्जको वृक्षभेदः । पक्षे—रञ्जकः ।

गिरश्च । अधिकंधरासक्ता हाराः कर्षकाश्च । अधिकंदराजिता अरयः शान्तिघनस्थल्यश्च । अधिकारिजनश्रियः लसन्ति न लसन्ति च । अधिकरणरसिका रथिका ग्रान्थिकाः स्त्रियश्च । अधिकासारश्रियं दधाना नगरी देशो घनश्च । यस्य चारिचक्रखण्डकं चारिचक्रम् अगदा गदा सन्नन्दकः सन्नन्दकश्च राजत इति ।

किं च । यस्य चराधिकानन्दः राजनीत्यां रते च । चरणजाता गङ्गा कीर्तिश्च । चेलाकृष्टी रतिकाले स्त्रीणां रणे अरातीनां च । चेतः-कलितानन्दा दया कटाक्षाश्च ।

यत्र शासति धरणीं कृष्णकेशश्रियं धत्ते कचरचना । राजहंसानल-सस्थितिर्हासश्च स्त्रीणाम् । अरिस्त्रियः अकेशा हरिजलजासनश्रीकण्ठ-दशां दर्शयन्ति ।

अतिलसत्सङ्गरहितता तैलयन्त्राणां न स्त्रीणां नारिसेनानां च ।

---

कंधरा कण्ठः । पक्षे—धरा भूमिः । दरस्त्रासः तेनाराजिताः । पक्षे—कन्दैरा-राजिता अतिशयेन राजिताः । अधिकारोऽस्यास्तीत्यधिकारी । पक्षे—अरिः शत्रुः । रणः । पक्षे—अधिकरणं पञ्चावयवयुक्तम् । तत्तु मीमांसाशास्त्रप्रसिद्धम् । पक्षे—करणानि नागादिबन्धाः कामशास्त्रे प्रसिद्धाः । इत्यर्थत्रयम् । अधिकेति च्छेदः । सारश्रियम् । पक्षे—कासारः सरसी । यथोचितं लिङ्गं ज्ञेयम् । पक्षे—'आसारो वेगवद्वर्षे' इत्यभिधानचिन्तामणिः । इत्यर्थत्रयम् । **यस्येति** । शत्रु-वृन्दखण्डकं अरयुक्तं सुदर्शनम् । अगदा पर्वतभेदिनी । सतां हर्षकः सन् नन्दकः खड्गः । चरा वार्तावेदकाः । पक्षे—चेति च्छेदः । राधिकागोपी । एवमग्रेऽपि । चेति च्छेदः । चरणः । रणः । चेलं वस्त्रम् । इला भूश्च । चेतो मनः । इतः मयीति यावत् । **यत्रेति** । कृष्णश्च कश्च ईशश्च कृष्णकेशा हरिब्रह्महराः इति मूर्तित्रयमिति चमत्कारः । तत्त्वार्थस्तु सुगमः । राजा हंसश्च अनलश्च चन्द्र-सूर्याग्नय इति तेजस्त्रयम् । तेषां समाना स्थितिर्यस्य स सस्थितिरिति चमत्कारः । राजहंसः पक्षिभेदः तद्वदनलसस्थितिरमन्दस्थितिर्यस्येति तत्त्वार्थः । अश्च कश्च ईशश्च अकेशाः । पक्षे—विधवाः । **अतिलसदिति** । तिलसत्सङ्गाभावाभा-

स्तननहर्षको घनकालो न स्त्रीजनः । चलतादर्शनं नेत्रे क्रीडाशैले च न चेतसि ।

किं च । स्त्रीणां कान्तिः कनकं स्तनः करकः कण्ठः जलजः नेत्रं नलिनमास्यं सरसं स्नेहस्थानं नन्दनन्दनः रागो न दीनः ।

किं च । अरसा अरातयो धृतशासना आस्यजा अरिष्टकारणं दधि कर्णशिरश्छेदाकर्णनं चिरंतनकथायां हंसानन्दासहता सैंहिकेये । राक्षसानन्दः शरद्गणे ।

अर्थासक्तिः शास्त्रचिन्तकानाम् । नार्थासक्तिर्गीतानन्दश्च यतीनाम् । न गीतानन्दः सहस्रधारणाकाङ्क्षा ऋषीणां क्षत्रियाणां च ।

किं च । लसच्छ्रीजानि स्त्रीजालानि क्षत्रियाधिकजातिंजालं च । सदाज्ञानि राष्ट्राणि अग्रजातिजालं च । अलं किलात्यन्तकथनायासेन । सदायानि संगतानि धनगृहाणि च हृदयानि च रथिकचक्रं चेति ।

---

वस्तिलसङ्ग एव । पक्षे—सङ्गो रतम् । पक्षे—संगरो रणः । स्तननं गर्जनम् । स्तनविषये न हर्षकश्च । चलता चञ्चलत्वम् । पक्षे—चेति च्छेदः । पक्षे—अस्थिरता । चपलत्वे प्रकारभेदात्पूर्वस्माद्भेदः । **किं च स्त्रीणामिति** । कनकमेवेत्यभेदस्तूपचारः । करकं दाडिमफलम् । 'करकस्तु पुमान्पक्षिप्रभेदे दाडिमेऽपि च' इति सुधा । जलजः शङ्खः । अन्यत्सुगमम् । अत्र वाक्यसप्तके वर्णवैपरीत्येऽपि विपर्ययाभावात्कश्चिच्चमत्कारः । **किं च । अरसा इति** । 'शासनं निष्करग्रामे' इति कोषः । आस्यजा ब्राह्मणाः अरिष्टं तक्रम् । हंसो नृपतिर्यतिर्वा । शरत्संवत्सरः । अर्थोऽभिधेयो द्रव्यं च । गीता भगवद्गीता गीतं च । धारणा । पक्षे—बहु(सहस्र)धेति च्छेदः । **लसच्छ्रीति** । श्रीजः काम इति बहुवचनम् । पक्षे—श्रीजानिर्नारायण इत्येकवचनम् । एवमग्रेऽपि । आज्ञाशब्दः । पक्षे—ज्ञानिशब्दः । क्षत्रियाधिकजातिर्ब्राह्मणजातिः । दायो देयद्रव्यम् । 'दायं ददात्यनुमोदते' इति भवभूतिः । संगतानि स्नेहाः । 'संगतानि मृगाक्षीणाम्' इति कुवलयानन्दे । पक्षे—आयो व्ययेतरः । पक्षे—'अयः शुभावहो विधिः' इत्यमरः । पक्षत्रये बहुवचनम् । रथिकचक्रपक्षे तु यानमस्यास्तीति यानि इत्येकवचनम् ।

अत्रान्तरे यासां चलन्तो दन्ता न नेत्रान्ताः, धवलाः केशा न हासाः, वृहद्वयो न कुचमण्डलम्, वली वदने नोदरे, भुग्नता मध्यदेशे न कुन्तलेषु, तासां तु जरद्वनितानां भिन्नभेरीसमानः कोऽपि ध्वानो व्याकुलीचकार ससखीकदम्बां राजकन्याम्। तथा हि—'अयेऽम्बाम्बाम्बरमणिमपि भीष्मकिरणं पश्य पश्य चण्डकोपो भूपः । यामः पुरीम् । शीघ्रं गृहाण शुष्कांशुकगणं पेटिकां च । राजभार्याया हर्षकारणं पङ्कजचयं खण्डय । अच्छाच्छैरम्भोभिरापूर्य कुम्भं भर शिरोभागे । भण मम गिरा राजकुमारीमाकारयाकारय । रचय प्रणामपरिपाटीं रमायाः' इत्युक्त्वा च चिरयन्त्यां राजकन्यायां पुनः किंचित्कोपेन निर्दन्त्याक्षराणि विस्मृत्य 'किं मयाग्रे गन्तव्यम्' इति रथसादमभिधाय अहहेति दन्त्याक्षरसंसर्गदूनदन्तावलयः खेदमुद्रामभिनीय जोषं तस्थुः।

ततश्चेयं राजपुत्री शनैरुत्थाय घनसारसदृशेन केशकलापेन न भोगयोग्येन रूपेण अतिमुग्धया दशया अनङ्गरागोज्ज्वलेन वपुषा नाभिस्पृष्टेन कुचमण्डलेन अतनुसुन्दरेण भूषाजालेन धवलसच्छोभेन मानसेन शोभमानाभिर्युवतीभिर्जरतीभिश्च परिवृता सा वैश्रवणं नीलेन पद्मेन च योजयन्ती अपाङ्गमाशुगं चेतस्ततः प्रेरयन्ती मुदा पीनं पयोधरमण्डलं

---

'ग्रामायव्ययलेखनेन' इति विश्वगुणादर्शप्रयोगः । निर्दन्त्यानि दन्तसंबन्धशून्यानि । तव्यमिति वर्णद्वयं दन्त्यम् । ततश्चेयं राजपुत्रीति । घनसारः कर्पूरम् । पक्षे—मेघश्रेष्ठः । भोगयोग्यं नेति । पक्षे—नभोगा आकाशगा देवाः । 'मुग्धः सुन्दरमूढयोः' । अङ्गरागोऽनुलेपनद्रव्यम् । पक्षे—मदनानुरागः । नाभ्या स्पृष्टः । पक्षे—अभिस्पृष्टो नेति । तनुः शरीरम् । पक्षे—अनल्पसुन्दरम् । धवलं च सच्छोभनं च । पक्षे—धवेन पत्या । निर्जरकदम्बो देवसमूह इति चमत्कारः । युवसमूह इति तत्त्वार्थः । वैश्रवणः कुबेरः । नीलः पद्मश्च निधि-

चन्द्रेण संघट्टयन्ती चन्द्रभूषणमपि करे व्यवस्थापयन्ती वशीकृतसकल-निर्जरकदम्बा यथागतं गतवती। इत्युक्त्वा तस्यां किंनर्यां संवृतवचनायां प्राह स नारदः ।

अथ सवितरि तीव्रे पर्वतेन प्रबोध्यमानकालापगमो देवस्य दर्शन-सुखमनुभवितुमत्रागतोऽस्मि । देव, किं चिन्तयसि । श्रवणादेव सा किं तरलयति तव चेतनाम् । मा भव तरलः । तरलो हारमध्यमणिरेव नायको भवति न पुमान् । तिष्ठ मनुष्यवत् । अस्त्वेतत् । देव, कथितं कथ-नीयम् । दृष्टो द्रष्टव्यः शेवधिः । तदनुगृहाण । गृहाणाशिषः । साध-यामि नारायणाश्रममिति ।

अथ श्रीनिवासेऽपि सस्तोकहासं 'महर्षे, अपि नाम ज्ञातं किं भवता कुलाभिधानादिकं तस्या युवमानसमत्स्यबडिशगुणजालस्य' इति वदति पुनः प्राह—'देव, भजकजननिर्जरागम, अहो लावण्यम् अहो विलासः अहो चातुर्यम् अहो रमणीयता रमणीमणेरिति जाताकस्मिककौतुकेन क्षणं क्षणं माध्याह्निकावश्यकरणव्यग्रतया क्षणं भवद्दर्शनाभावचिन्ताता-न्तान्तःकरणतया निरोष्ठे च श्लेषाभियोगे कालं गमयतो ममैतच्छ्रावणेच्छा न संवृत्ता । इयमुक्तिरपकारवती जाता । अहो किं कुर्मः । मुनयो वयं अपवर्गवार्तामुपदिशामः । तथा हि ।

---

भेदः । पक्षे—श्रवणं श्रुतिः । नीलोत्पलम् । अपाङ्गो मदनः । आशुगो वायुः । पक्षे—कटाक्षः । तीव्रगमनः । इनं सूर्यम् । मेघमण्डलमपि । सुधांशुना । पक्षे—पीनं कुचमण्डलं कर्पूरेण । शिवम् । राजग्राह्यद्रव्ये । पक्षे—स्वर्णाभरणं पाणौ । **अथ सवितरीति** । तरलश्चञ्चलः । नायको नेता । पुमान्न भवति । हारमध्यमणिः । पक्षे—द्वावपि मध्यरत्नवाचकौ । मनुष्यवदिति लाकोक्तिरिति चमत्कारः । नारायणवन्मा तिष्ठेति तत्त्वार्थः । साधयामि गच्छामि । 'साधनमनु-गमगत्योः शेफसि सिद्धौ निवृत्तिदापनयोः । मृतसंस्कारे हेतौ धनहिंसायाम्' इति

विष्णुर्ध्येयो वैष्णवाः सङ्गयोग्यास्तीर्थक्षेत्रस्थानसंसेवनं च।
योगाङ्गानां साधनं तत्त्वचिन्तेत्येषा रीतिः श्रेयसे जायते नः॥१७॥

किं च। किं योग्येयं वृत्तिर्विरक्तानां यद्वनिताजनेन सह वाक्संयोजनम्। अथ ज्ञात्वा वा किं कृत्यं देवस्य कृतविवाहस्य। देव, कल्याणी विजयी तिष्ठ' इति।

देवोऽपि 'केयं भवेत् क्व वा तिष्ठेत् कथं जानामि कं वा पृच्छामि कः शमयति ममाधिम्' इति चिन्तासीमन्तितहृदयो दर्शितशुष्कमुखविकासस्तत्कालोचितालापैर्नारदं विसर्जयांबभूव।

एवं सति,माकन्दप्रवालकदम्बचुम्बनसुखितमत्तपरभृतमहिलानिरन्तरोदञ्चितपञ्चमस्वरान्तरितनिजवनिताकृतपरपुरुषसंकेतसंराववञ्चितगृहपतिरारामरमाप्रथमर्तुमहोत्सवारम्भमङ्गलगीतिकापठनाविरतलोललोलम्बनितम्बिनीश्रुतिसुभगझंकारश्रवणसमयसंस्मृतनिजनायकाहितैकाग्रमनीषानिश्चलस्थितमज्जनागतयौवतशतालीककनकसालभञ्जिकापुञ्जरञ्जितमञ्जुवञ्जुलनिकुञ्जवलयितसुवर्णमुखरीतटः प्रियजनसंकेतितवेतसीवनगामियामिनीशसुखकामिनीग्रहयालुयामिनीचरसमानयामिकराजपुरुषगृहीतनिजकरसंस्पर्शसंजातसात्त्विकभावशिथिलिततत्करमुष्टिबन्धविनिर्गतललनालोकावलोकनमुदितान्तरङ्गभुजङ्गनिकरसंस्तुतमदनकटुकलम्बकदम्बो वनिताकुचाभोग इव बहुसरोजातसमृद्धिर्वीर इव पराङ्गनाशंकरो हिमगिरिरिव मदकलक-

---

रत्नमाला। देव भजकजनेत्यारभ्य संवृत्तेत्यन्तग्रन्थे पकाराभावः। तथाहीत्यारभ्य विजयी तिष्ठेत्यन्ते ग्रन्थे पवर्गाभावो ज्ञेयः। माकन्देति। सुवर्णमुखरी नदीभेदः। यामिकाः 'पाहरेवाले' इति भाषा। सात्त्विकभावः स्तम्भप्रलयरोमाञ्चादिः। भुजङ्गो विटः। कलम्बो बाणः। सरोजातं पद्मम्। पक्षे—सरो हारः। उत्तमाङ्गनानां सुव्रतः। पक्षे—शत्रुशरीरनाशकः। मदयुक्ता कलकण्ठी पिकी। पक्षे—मदकलो मदोत्कटः। जातिर्मालती। पक्षे—अजो ब्रह्मा। रसाला आम्रवृक्षः।

ण्ठीरवत्रासितपथिकः सरस्वतीदेह इवाजातिभूषितो वनिताजन इव रसालसहितो रत्नं सकलर्तूनां प्रत्नं भागधेयं सतीनां सुराजीवोऽपि सुमनःसंदोहश्लाघितः अशोकयुक्तोऽप्यसुमनाः कुसुमाकरस्त्वाविरासीत् ।

अथ तं दृष्ट्वा देवोऽप्यचिन्तयत्—'अहो महनीयता वसन्तस्य ।

आचार्यो मदनागमस्य किमपि स्त्रीमानरुग्भेषजं
कान्तायुक्तविलासिलोकचरितप्राचीनभाग्योदयः ।
यस्त्वागत्य लतासु पल्लवरुचिं संपादयिष्यन्भृशं
संजातोत्कलिकासु तासु रमते राजद्वयाः सांप्रतम् ॥१८॥

अपि च ।

भङ्गो माने चक्रशोभा कुचेऽपि न्यस्ता चित्ते सारसश्रीर्वधूनाम् ।
युक्ते ताभिर्जीवनं वै वियुक्ते पङ्कं पुंस्याश्चर्यचर्येण येन ॥ १९ ॥

इदानीं हि ।

---

पक्षे—प्रेमालसानामाप्तः । 'जातौ जातौ यदुत्कृष्टं तद्रत्नम्' इति जगद्धरः । सुराजीवो मद्याजीवी । सुमनसो विद्वांस इति विरोधः । शोभनपद्मः । पुष्पाणीति परिहारः । शोकशून्यः अशोभनचित्त इति विरोधः । वृक्षभेदयुक्तः जातिपुष्परहित इति परिहारः । 'सुमना मालती जातिः' इत्यमरः । **अहोमहनीयतेति** । मानः कोपभेदः स एव रुग्रोगः । 'किमव्ययमदेश्ये (?) स्यादीषन्मात्रे परात्मनि' इत्यजयः । पल्लवरुचिर्विटासक्तिः । उत्कलिका उत्कण्ठा । वयो यौवनमिति चमत्कारः । तत्त्वार्थस्तु किसलयकान्तिः पक्षीति । 'षिङ्गः पल्लविको विटः' इत्यमरः । 'पल्लवोऽस्त्री किसलयम्' इति च । 'कलिका कोरकः पुमान्' इति च । तासु संजातोत्कलिकास्वित्यनेन 'मोहनं नारभेत्तावद्यावन्नोत्कण्ठिता प्रिया' इति कामशास्त्रं संगृहीतम् । मोहनं निधुवनम् । भङ्ग इति । तरङ्गावर्तकमलजलकर्दमानां वैयधिकरण्येन स्थापनादाश्चर्यचर्यत्वं वसन्तस्य । तत्त्वार्थस्तु भेदः । चक्रवाकशोभा । सा प्रसिद्धा । रसश्रीः प्रेमसंपत् । प्राणः । **पाप-**

कलिकालकृतं मन्ये यज्जगत्सुमनोन्वितम् ।
माधवोऽत्रान्यथा कस्मान्माधवीजालकावृतः ॥ २० ॥

तदत्र नारदवचनश्रवणविदीर्णहृदयस्य मम भगवान्धृतसुमाकरसंपत्सारङ्गप्रियः कनकश्रीविद्योतमानाम्बरो माधव एव शरणम् । यदनुग्रहादहमपि योगी भवेयम् । यदयमचेतनोऽपि पन्नगाद्रिरङ्गीकृतविपुलनितम्ब इव दृश्यते ।

अस्त्वेतत् । मृगयाव्याजेन वनभूमिषु विनोदयामि मानसमिति विचिन्त्य च वकुलमालाप्रेरितवराहदत्तेन किरातसैन्येन सह पद्मव्यूहमिव विलसत्केसरं वैद्यमिव तिरस्कृतवातवर्गं गङ्गाप्रवाहमिवार्यावर्तहृद्यम् । उत्तरगोग्रहणरणमिव स्तब्धकर्णं वर्णसमूहमिव ह्रस्वदीर्घप्लुतसुन्दरं चित्ररथमिव गन्धर्वश्रेष्ठं वणिजमिव भाण्डभूषितं कर्णाटदेशगोरसमिव मेघ-

---

मिति । **कलिकालंकृतमिति** । कलेः कालं कृतं युगभेदं मन्ये । सुमनसा शोभनचित्तेन जातमिति शेषः । माधवीजालकं यादवस्त्रीसमूहः । माधवः कृष्ण इति चमत्कारः । तत्त्वार्थस्तु कोरकालंकृतम् । सुमनसः पुष्पाणि । माधवी लताभेदः । जालकानि कोरकाः । माधवो वसन्तः । 'चतुर्थेऽपि युगे कलिः' इत्यमरः । 'युगपर्याप्तयोः कृतम्' इति च । 'जालं गवाक्ष आनाये कोरके दम्भवृन्दयोः' इति विश्वः । **तदत्रेति** । सुमाकरः शोभनलक्ष्मीपाणिः । 'इन्दिरा लोकमाता मा' इत्यमरः । गजेन्द्रप्रियः । ध्यानवान् । तत्त्वार्थस्तु—भङ्गप्रियः । वसन्तः । संगतिमान् । 'योगः संनहनोपायध्यानसंगतियुक्तिषु' इत्यमरः । विपुलनितम्बा वनिता । 'सिंहस्याश्वस्य पुच्छे तु किंजल्के केसरोऽस्त्रियाम् । नागकेसरपुंनागबकुलेषु पुमानयम् ॥' इति रत्नमाला । आर्यावर्तो देवमण्यादिः । पक्षे—'आर्यावर्तः पुण्यभूमिर्मध्यं विन्ध्यहिमालयोः' इत्यमरः । 'रेचितं वल्गितं प्लुतम्' इति च अश्वगमनभेदः । पक्षे—"ऊकालोऽज्झ्रस्वदीर्घप्लुतः' इति शाब्दिकाः । गायने पशुभेदे च रससिद्धे च खेचरे । अन्तराभवसत्त्वे स्याद्गन्धर्वस्तुरगेऽपि च ॥' इति रन्तिः । 'नदीपात्रे भूषणे च तुरगाणां च भूषणे । मूलद्रव्ये च वणिजां भाजने भाण्डमु-

पुष्पसदृशं वालिनमिव सुग्रीवपरिपन्थिनं मदनमिव मानससंभवं प्रथमम-श्वकुलेषु द्वितीयमुच्चैःश्रवसा तृतीयं वातगरुडयोः अदृष्टवडवाननमपि राजनन्दनं नीलं कर्णे श्वेतं मुखे संपातिनं गमने हयमारुह्य विपिनम-यासीत् ।

ततश्च केचन किराता भग्नकीचका भीमाः, शल्यान्दारयन्तो धर्म-राजाः, शिखण्डिविरोधिनो भीष्माः, द्रोणपक्षधराश्च शृगालभयंकराः कृष्णाः नागत्रासकाश्च, पुण्डरीकद्वेषिणो दोषाकराः पथिकापकारिणश्च, शूलहस्ता महाकाला उग्राश्च, काननं रुरुधुः । तदा तु केचन जरासन्धा इव वृकोदरं गदया ताडयन्तः केचन कर्णा इव शक्त्यार्जुनमुन्मूलयितु-मिच्छन्तः केचन रुद्रा इव गजाञ्शूलेन दारयन्तः केचन कवय इव प्रासेन नानाशुकवीनुद्वेजयन्तश्चेरुः ।

किं च । खड्गी खड्गिनं कञ्चुकी कञ्चुकिनं चक्री चक्रिणमच्छभल्लो-ऽच्छभल्लं रक्ताक्षो रक्ताक्षं जघान । तदनु भग्नाः कुम्भाः कुम्भिकुम्भाश्च

---

च्यते ॥' इति लिङ्गाभट्टः । मेघपुष्पः सुग्रीवश्च कृष्णाश्वभेदः । पक्षे—जलम् । गोरसस्तक्रम् । चेतसा निर्मितम् । वडवा वह्निभेदः । राजा चन्द्रः नन्दनः पुत्रो यस्य स समुद्र इति विरोधः । तुरंगयोषिदिति परिहारः । सुरतव्यापारेणाश्वो दुर्बलो भवतीति तज्ज्ञानां वादः । 'अश्वा वडवा' इत्यमरः । नीलादयस्त्रयः कपिभेदाः । **ततश्चेति** । द्रोणः काकभेदः । शृगालो वसुदेवपुत्रः कश्चिद्राजा । पथिकः वियोगी । महाकालः शिवः । **तदा त्विति** । वृकाणामीहामृगाणामु-दरम् । 'कासुसामर्थ्ययोः शक्तिः' इत्यमरः । 'कासुः शक्त्यायुधेऽपि च' इति विश्वः । गजोऽसुरभेदः । प्रास आयुधभेदः । शुकवयः कीरपक्षिणः । पक्षे—काव्यगुण-भेदः । आशुकवय आशुकाव्यकर्तारः । 'पक्षी च विर्निगदितः' इत्येकाक्षरः । **किं चेति** । खड्गादित्रयमायुधभेदः । कञ्चुकः कवचः । रक्ताक्षस्ताम्राक्षः । पक्षे गण्डकं मृगं सर्पं भल्लूकं महिषम् । 'रक्ताक्षो महिषे दैत्ये पारावतचकोरयोः' इति रत्नमाला । **तदन्विति** । कुम्भा वृक्षभेदाः । पत्रं गरुत् । 'शम्बरं सलिले पुंसि

नष्टपत्राः पक्षिणो वनलताश्च मृदितद्विजा वृक्षाः वनगजाश्च नाशितशम्बराः वनभुवस्तटाकाश्च छिन्नपुष्कराः करिण्यः पुष्करिण्यश्च उत्पाटितनेत्रा नगा नागाश्च आकृष्टजीवाश्चापा महिषाश्च खण्डितस्कन्धास्तरवो व्याघ्राश्च बभूवुः ।

स च मृगयाव्यापारो रावण इव नलकूबरं दूषितरम्भं घर्मकालदिवस इव सरः अपुण्डरीकं, प्रभातकाल इव नभः अनृक्षं, कालीकरवाल इव भूतलममहिषं, युधिष्ठिर इव भारतमशल्यमरण्यं चकार । किं बहुना ।

संजातसंभ्रमभरैर्वनदेवतानां
वृन्दैरमन्दभयकम्पितमानसैर्यः ।
आकर्णितश्चकितसिन्धुरसिंहकोलः
कोलाहलोऽथ मृगयाजनकण्ठजातः ॥ २१ ॥

मृदितपृथुलकुचकुम्भा खण्डितरम्यद्विजच्छदा तान्ता ।
आयासिततनुलतिका रतान्तलीलां बभार वनभूमिः ॥ २२ ॥

अत्रान्तरे । गजमपि कुम्भोद्भासितं नीलमपि केसरिद्वेषिणं अञ्ज-

---

मृगदैत्यप्रभेदयोः' इति सुधा । 'पुष्करं द्वीपतीर्थाहिखगराजौषधान्तरे । तूर्यास्येऽसिफले काण्डे शुण्डाग्रे खे जलेऽम्बुजे ॥' इति हैमः । 'मौर्वी जीवा गुणो ज्या' इति धनंजयः । 'देहप्रकाण्डयोरंसे सैन्यभागसमूहयोः । समीहानृपयोः स्कन्धः' इति लिङ्गभट्टः । **स च मृगयेति** । कुबेरपुत्रासक्तां रम्भां बलाद्रावणो जग्राहेति श्रीरामायणम् । 'व्याघ्रदिग्गजभैषज्यसितच्छत्रसिताम्बुजे । कोषकृज्जन्तुभेदे च' इति लिङ्गभट्टः । ऋक्षो भल्लूकः । पक्षे—क्लीबे नक्षत्रम् । **संजातेति** । सिन्धुरो गजः । **मृदितेति** । लकुचः कुम्भश्च वृक्षभेदः । द्विजच्छदः पक्षिगरुत् । पक्षे—रदनच्छद ओष्ठः । तनुर्लता कृशलता । पक्षे—देहलता । **अत्रान्तर इति** । गजकुम्भौ कपिराक्षसौ नीलकेसरिणौ । अञ्जना अनुपमा च करिणीभेदः । कालो यमः गिरिशः शिव इति विरोधः । परिहारस्तु अञ्जनं नेत्रलेपनद्रव्यम् । 'कालो

नाकृतिमपि अनुपमाकृतिं कालमपि गिरीशाकारं गरुडमिव पक्षचरं सुकविवाग्विलासमिव परिणतं शेषमिव सदानन्तं विलासिनीजनमिव भ्रमरचुम्बितकपोलमण्डलं मत्तदन्तावलमालोक्य अर्जुनबाहुसहस्रनिरुद्ध-वनगजमदमलिननर्मदाप्रवाहैरिव सहसानिरुद्धगतिप्रसरैस्तद्दर्शनत्यक्तभल्लै-र्भिल्लमल्लैः 'देव, इयं न मृषा किंवदन्ती मारीचनामा राक्षसः सारङ्ग-रूपेण मुनिहिंसनाय संचरतीति स सारङ्गो न मृगः किं तु महामृग इति ज्ञातम् । अथवा गजासुर एवायं उत वा कुवलयापीडः देवेनापि ज्ञात एव स एव वा न विद्मः यदत्रैव कोऽपि पर्वताकारः' इति निवे-दिते किंचिद्धसन् 'आः किं भणत मूढाः, निरर्गलभुजबलप्रसारेषु रामश्रीकण्ठवासुदेवेषु अचलोद्भूतिभार्येषु पार्श्वस्थितसुग्रीवेषु जयत्सु का कथा तादृशानां पापानाम् । तिष्ठत्वेतत् । करिकीटः कश्चिन्मर्तु-मिच्छति वराकः । तन्निःसरत मद्बाणपातभुवः' इति वदन्नेव बाणं मुमोच ।

युक्तं शरस्तु पतितो यस्माद्गुणविच्युतो बभूव किल ।
चित्रमिदं यत्त्यक्तः श्रीपतिना मार्गणो वदान्येन ॥ २३ ॥

---

मृत्यौ महाकाले समये यमकृष्णयोः' इति सुधा । 'तिर्यग्दन्तप्रहारस्तु गजः परि-णतो मतः' इति हलायुधः । पक्षे—रोगभेदः । तं प्रसिद्धम् । दानसहितं सदा-नम् । पक्षे—'शेषोऽनन्तः' इत्यमरः । 'भ्रमरः कामुके भृङ्गे ललाटालकयोरपि' इति विश्वः । अर्जुनः कार्तवीर्यः । महामृगो गजः । 'महामृगः पुष्करिपद्मपीलवः' इति हारावली । अचलाया भूम्याः सकाशात् उत् उत्कृष्टा भूतिरुत्पत्तिर्यस्याः सा सीता । पक्षे—पर्वतोत्पन्ना पार्वती । पक्षे—अचले उद्भूतिभे उत्कृष्टैश्वर्य-कान्ती ताभ्यामित्यर्थः । 'भा छविः' इत्यमरः । सुग्रीवः कपिभेदः । पक्षे—सुग्रीवा पार्वती । पक्षे—अश्वभेदः । युक्तमिति । पतितो भ्रष्टः । मार्गणो याचकः । वदान्यो दाता । श्रीः संपत् । इति चमत्कारः । तत्त्वार्थस्तु मार्गणो

तदैव सोऽपि द्विरदमणिरनणीयसा भयेन दुद्रुवे दूरं कराग्रलग्नशरः।

पुष्कराग्रे पतन्रेजे श्रीमान्कृष्णशिलीमुखः।
चित्रं चित्रमयं मूढः पुंनागो द्रवति स्म सः॥ २४॥

स्थाने खलु मातङ्गजातेः कृष्णविमुखभावः। देवोऽपि विहाय किरातचक्रं तं गजमनुससार। सोऽपि तस्यामवस्थायां धीरधीरसंचारो वासितावशीकरणविदग्धः शृङ्गारशाली चरमोत्तुङ्गस्तननास्तलीलः श्यामानां सुन्दरीणां महिलानां गणैः परिवृतायां कस्यांचिद्भूभृद्भुवि निपपात गजः कटाक्षश्च श्रीनिवासस्य। ततश्चेयमद्भुता व्यक्तिर्दृष्टा।

सुशङ्खचक्राङ्कितपाणिशोभा यात्रासमुद्वेजितराजहंसा।
लसद्रसोल्लासिपयोधरश्रीर्नूनं रमायाः सहचारिणी स्यात्॥२५॥

इति निश्चित्य संजातसात्त्विकभावः कथंकथमपि वारामाभिमुखीभूय ययौ दन्तावलः श्रीनिवासभूपालश्च।

तदनु भगवांस्तां राजपुत्रीम् 'अयि सुमते, लोलम्बकं पश्य। उन्मादिनि मदनकलिके, पुण्डरीककुलं खण्डय। चपले, मल्लिकासरं महिषी-

---

बाणः। **पुष्कराग्र इति**। पुष्करं कमलम्। कृष्णशिलीमुखो नीलभृङ्गः। पुंनागो वृक्षभेदः। इति चमत्कारः। तत्त्वार्थस्तु—करिहस्ताग्रम्। वसुदेवशरः। पुरुषगजः। 'युक्ते द्वे सांप्रतं स्थाने' इत्यमरः। मातङ्गश्चण्डालः। पक्षे—करी। **सोऽपीति**। 'वासिता करिणीनार्योः' इति रत्नमाला। 'रसे नाट्ये च शृङ्गारः करिमण्डन एव च' इति विश्वः। चरमं पश्चिमम्। उत्तुङ्गं यत्स्तननं गर्जनं तेनास्तलीलः। पक्षे—चेति भिन्नं पदम्। रमोत्तुङ्गस्तनयोरस्ता लीला नेति नसमासः। श्यामादित्रयं वृक्षभेदः। भूभृद्भूः पर्वतभूमिः। पक्षे—राजपुत्री। अन्यत्सुगमम्। शङ्खचक्रं वलयसमूहः। रमा सहचारिणीति व्यक्तिविशेषणम्। नारायण इत्यर्थः। पक्षे—रमा सखी। मायासीतावतारभूतेति भावः। आराम उपवनम्। पक्षे—रामा स्त्री। **तदन्विति**। लोलम्बकं भृङ्गमिति वनविहारलीलापक्षे। मृगयापक्षे—लोलं चपलं वक्रं पक्षिभेदम्। मल्लिकाहारम्। राजभार्याप्रियम्। पक्षे—सैरिभीप्रियं कासरं सैरिभम्। मल्लीति संबोधनम्। 'सूच्यग्रे क्षुद्रशत्रौ च रोमहर्षे च कण्टकः' इत्यमरः।

प्रियं बधान । कोमले मालति, पथि कण्टकीभवत्पुंनागनेत्रमुत्पाटय । ललितसुमांसे, इत एहि । गृहीतराजीवजीवने, कृतकृत्यासि । उत्पला-भिलाषिणि, रक्तं मा त्यज । विशालनेत्रे, त्वचं दलय कदलीनाम् । प्रमादशीले, कोलम्बकं च गृहाण' इति मृगयामिव वनविहारलीला-मनुभवन्तीभिः सवयोविलासाभिः सखीभिः परिवारितां विलोक्य तन्नि-कट एव स्थापिततुरङ्गश्चिन्तयामास ।

अये इमामेवाह नारदः । तथा हि । अस्या नागसदृशी वेणिका, न कुचमण्डली । अगुरुविशेषकानन्ददायि ललाटमण्डलम्, न चरि-त्रम् । अञ्जनाञ्चिता नेत्रद्वयी, न मतिः । पल्लवप्रणयिन्यधरच्छविः, न स्पृहा । अतिलसत्सुमनोहारिणी कुचद्वयी, न नासा । नक्षत्रेशमनोहरं मुखम्, न रूपम् । अरम्भायमानं वयः, नोरुयुग्मम् । कुवलयमनोज्ञं जघनम्, न करद्वन्द्वम् । नगजानुकारी गुणः, न गतिक्रमः । अस्त्वे-तत् । केयं भवेत् । प्रायेण चन्द्रधन्वन्तरिकल्पपादपादीनां सहोदरी रमेव क्षीरपारावारादेवोत्पन्ना । अन्यथा कथं तेषां गुणगणोऽस्याम् ।

---

पुंनागतरुमूलम् । पक्षे—पुरुषगजनेत्रम् ' मनोज्ञकुसुमस्कन्धे । पक्षे—मञ्जुशोभनमांसे । राजीवं पद्मम । जीवनमुदकम् । पक्षे—मृगप्राणः । उत्पलमिन्दीवरम् । रक्तं रक्तोत्पलमिति प्रकरणादर्थः । पक्षे—उत्कृष्टमांसम् । शोणितम् । 'रम्भावृक्षेऽपि कदली पताकामृगभेदयोः' इति मेदिनी । कोलम्बकं वीणाङ्गभेदम् । 'कोलम्बकस्तु कायोऽस्या' इत्यमरः । पक्षे—कोलं वराहम् । बकं पक्षिभेदं च । **अये इमामेवेति** । नागः सर्पः । अगः पर्वतः । 'कालागुर्व-गुरुः स्यात्' इत्यमरः । विशेषकं तिलकम् । पक्षे—गुरूणामधिकानन्ददायि । अञ्जनम् । दोषः । पल्लवः षिङ्गः । अत्यन्तशोभमानं कुसुमैः । मालिनी । पक्षे—तिलसत्कुसुमवन्मनोहारिणी । क्षत्रेशो राजा । अरमलम् । अत्यन्तमित्यर्थः । पक्षे—रम्भासमानमेव । कुवलयं भूमण्डलम् । तादृक्पृथिवीति भावः । पक्षे—कुत्सितकरभूषणम् । नगजा पार्वती । पक्षे—गजः । **केयं भवेदिति** । 'अब्जो

तथाहि । अब्जशब्दवाच्यस्य चन्द्रस्य गुणो नेत्रयोः । सुरागस्य पारिजातस्य कुचयोः । जैवातृकस्य धन्वन्तरेर्मुखे । दिव्यनागस्यैरावतस्य वेण्याम् । मधुनो वारुण्या अधरे । रम्भाया अप्सरसां ऊरुभागे । गौरस्योच्चैःश्रवसो वर्णे । तिष्ठत्वेतत् ।

किमेषा कंदर्पशरशरव्यतां प्रापिता केनापि भवेत् । आः, कः संदेहः । येनास्याः शरच्चन्द्रदशां प्रापिते गण्डमण्डले सखीजनरचितो मृगमदपत्रभङ्गः कुरङ्गभ्रमं जनयति । स हि पाण्डिमेवेत्थं स्फुटं जल्पति । किमनया प्रकृतानुपयुक्तया चिन्तया । प्रथमं तावदेतद्विचारणीयम् । किमस्यामहमिव मय्येषानुरक्ता न वेति । अथ वा किं तदद्यापि न निश्चीयते । कथमन्यथा कूणितत्रिभागेण चक्षुषा सव्याजं मामियं पश्येत् । निरुद्धोऽपि कोऽपि विकारः कथमस्याः प्रसरेदङ्गेषु । स्वेदलवमुक्ताजालकैरलंक्रियेताभिनवस्फटिकभित्तिधवला कपोलपाली । कथमुत्तम्भयेदुत्तरं वासः रोमहर्षोद्भेदः । कथं नर्तयेद्दक्षिणानिल इव लतामूरुकम्पः । कथं शिथिलीभवेन्नीवीबन्धः । कथं भुवमालिखेच्चरणनखमणिः । कथं प्रस्फुरेत्प्राक्पुण्यवाराशितरङ्गबन्धुरं मम दक्षिणं चक्षुः । कथं यानि भैष्मीहरणकाले शुभानि निमित्तानि तान्येवेदानीं पश्यामि । कथं दूरादेव मां विलोक्य चिरमालोच्य सभ्रूभङ्गमनेन सखीकदम्बेन परस्परं मन्दं मन्दं समन्दहासमालपितम् । कथमनया नीलोत्पलदलावतंसया श्रितपोतचूतालवालनिकटदेशया वनितया सकङ्कणझणत्कार-

---

धन्वन्तरौ शङ्के पद्मेन्दुनिलयेषु च' इति लिङ्गाभट्टः । सुराणामगो वृक्षः । पक्षे—पर्वतः । 'शैलवृक्षौ नगावगौ' इत्यमरः । 'जैवातृकः कर्षकेन्द्वोर्वैद्ये नायुष्मति त्रिषु' इति रत्नमाला । वारुणी मद्यम् । 'मधु मद्ये पुष्परसे क्षौद्रेऽपि' इत्यमरः । **किमेषेति** । श्रवणं हस्तश्च नक्षत्रभेद इति चमत्कारः । श्रोत्रं पाणिरिति तत्त्वार्थः ।

मन्यस्याः करकमलान्मां च तं च मुहुर्मुहुः पर्यायव्यावृतकंधरं पश्यन्त्या आच्छिद्य निगूह्य च चित्रपटं आकुञ्चितभ्रूनिर्भर्त्सितमिव किमपि उपदिष्टम् । अपि नाम दाहशक्तिरुत्पद्येत चन्द्रिकायाम् । कदाचिदपि वा देवर्षेर्मन्त्रजपसनाथाद्वदनारविन्दान्निःसरेदलीकं वचः । कथमस्थानसक्ता भवेन्मच्चित्तवृत्तिः । कथमदन्यभोग्ये वस्तुन्यप्येतादृशलावण्यसर्वस्वं स्थापयेद्वेधाः । एतस्या गुणाकर्णनेन श्रवणानन्द इव स्पर्शेन हस्तानन्दो नासीदिति वामः पन्थाः । भगवन्कुसुमायुध, मा जनय क्षणमुद्वेगम् । तावन्निर्वापयामि पूर्णचन्द्रदर्शनसंतापितं नेत्रयुगलं प्रत्यङ्गदर्शनेनास्मिँल्लावण्यसुधासरसि मुखजितचन्द्रमसि कान्तितिरस्कृतकाञ्चनमहसि कुचतुलितचक्रवाकवयसि हृतमन्मनसि अभिजातकन्यामणौ । अथ वा मकरध्वजेन दत्तदर्शनावसरस्यापि आनन्दबाष्पकलया निरुद्धं खल्वालोकनसामर्थ्यम् । अस्त्वेतदपि । कथं संभाषयाम्यलब्धवागवसरः । सूक्तमुक्तं केनचित् 'शास्त्रं सुनिश्चितधियापि विचारणीयम्' इति । यतः व्यवहित्वाद्बहोः कालस्य विस्मृता खलु सा व्रजयुवतिजनवशीकरणकला । इत्येवं चिन्तयति श्रीनिवासे काचिद्राजपुत्रीसखी कंचन वन्यमतङ्गजं विलोक्य प्राह—'अयि भर्तृदारिके, पश्यैनं मत्तदन्तावलम् । अयं खलु नारदप्रोक्तो गिरिगहनचारी पुंनागो यदि त्वयि करं प्रसारयेत्कस्ते शरणम् । अथ वा त्वमपि लसच्चूलीवासिता । नात्र तव भयलेशः । तदस्तु तोषायैव तावदयं शिलीमुखो मदनान्निर्गत्य व्याकुलयति त्वां तत्र को वा उपायः' इति ।

---

वामो वक्रः । अयि भर्तृदारिके इति । पुंनागः पुरुषगजः । करः शुण्डा । 'कर्णमूलं तु चूलिका' इत्यमरः । वासिता करिणी । शिलीमुखो भृङ्गः । मदनो वृक्ष इति चमत्कारः । तत्त्वार्थस्तु पुरुषश्रेष्ठः पाणिः वेणी वनिता बाणो मन्मथः ।

तदाकर्ण्य स्तोकं हसति सखीवर्गे 'अलमलं चपलभाषणैः' इति अलीककोपकलुषितायां तर्जयन्त्यां राजसुतायां देवे श्रीनिवासेऽपि 'कल्याणीयमेतस्या उक्तिरमृतासारमाधुरीसोदरी राजसुता वयस्याया आश्वासयति मदनमहाभुजङ्गचुम्बितस्य मे मानसम् । अयमयं मिलितोऽस्माकं वागवसरः । अत एवं वक्तव्यं मदनमहाग्रहग्रस्तस्य संबद्धासंबद्धकथने को विधिः को निषेधः' इति निश्चित्य 'अयि राजसुतासखि, किमियमबलेति मत्वा त्रासयसि । सा चित्रोरुकरवाला त्वदुक्तभयस्याभूमिर्विविधायुधपरिष्कृता च । तथा हि । अस्याः कुचश्चक्रश्रियं वहति । ललाटमण्डलमर्धचन्द्रसंपदं धत्ते । चन्द्रहासशोभां कलयति वदनम् । कुन्तलसल्लक्ष्मीं स्वीकरोति वेणिका । तदलमेवंविधभाषणैः । एवं स्थितेऽपि यदि ते भर्तृदारिकाया मनोजातभयं तदहं क्षणादेव परिहर्तुं शक्तः' इति वदति काचित्सखी तां बभाण—'अयि मदनकलिके, श्रुतं किलैतस्य किरातचक्रवर्तिनो भाषितम् । तन्मूलं भवति किल । यद्दत्तस्त्वयास्य वागवकाशः । दत्तान्तराणां पुरुषाणामेतादृशो वाक्प्रपञ्चो दृश्यते । तदसंबद्धलापिनी त्वमेवात्र तिष्ठ । वयमेता भर्तृदारिकामादाय भवनं गच्छामः । यत्त्वं कुमारीजनविरुद्धाचारप्रवृत्तासि । सत्यपि अनुरागे पश्यति यूनि नावेक्षणम् । उद्भिन्नेऽपि रोमकुलेऽवहित्था मार्तिकशकलेन हन्तुमिच्छति अभिमतेऽपि तरुणे मनोभावाप्रकटनमित्यादि कुलकन्यालक्षणमिति ।

एवं वदन्त्यां तस्यां सत्यमाह प्रियसखीति नन्दिततद्वाचि राजपुत्र्यां सापि किंचित्कुपितेवाह—'अयि शृङ्गारमञ्जरि, सुचरित्रविस्मापितवसिष्ठकलत्रे, अपराद्धं मया । हितासि त्वं भर्तृदारिकायाः । एतत्फलमचिरादेवानुभवन्तीं भर्तृदारिकां द्रष्टुमिच्छसि ।' इत्युक्त्वा च विरतवच-

नायां तस्यां देवे श्रीनिवासेऽपि उन्मत्तकेन मदनेन विस्मृतवाच्यावाच्यविचारे 'अयि सुन्दराङ्गि राजसुते,

वचसा मा कुरु मुग्धे कुरु रूपेणैव रतितिरस्कारम् ।
कठिना कुचयुगली ते भवतु सरोजाक्षि मानसं मास्तु ॥ २७॥

इति यावद्वदति तावदेव काचिन्नारायणपुराज्जरद्दासी राजाङ्गनाप्रेरितागत्य 'भर्तृदारिके, देवी धराज्ञापयति पुष्पावचयायागताया भवत्याः का खलु वेला जाता । महाराजः प्रतिपालयति तवागमनमभ्यवहारार्थी । तदागच्छ शीघ्रम् । यामो गृहम् ।' इत्युक्तवती ।

ततः पद्मावती ससखीकदम्बा तरलतरतारया दृशा आवृत्यावृत्य सव्याजं पश्यन्ती वनात्प्रस्थिता ।

भगवानपि तत्कटाक्षार्धचन्द्रव्रणितहृदयः किंचिद्दूयमानेन मनसा वातोज्जीविनीमिव पश्चादेवोपगन्तुमिच्छन्तीं चेतोवृत्तिं बलादाकृष्य सुन्द इव मारीचनन्दने बधिर इव संज्ञाव्यवहारशालिनि कश्यप इवोल्लसन्मरीचौ ऐरावण इव निजकरोद्भासितपुष्करे घर्मकालाध्वनीन इव कामितच्छाये भगवति चित्रभानौ चरमाचलशिखरमारोहति यथास्थानमागत्य विसृज्य किरातचक्रं स्वामिसरःपुण्यजलेषु अक्रमकृतसंध्यावन्दनाद्यवश्यव्यापारः कृताकारगुप्तिरेव बकुलमालाकल्पितपुष्पशयने निविष्टः ।

---

**चित्रेति** । चित्रोऽद्भुतः करवालः खड्गो यस्याः । अर्धचन्द्रो बाणभेदः । चन्द्रहासः खड्गः । कुन्त आयुधभेदः । मनश्वेतः । जातभयमिति चमत्कारः । तत्त्वार्थस्तु—चित्र ऊरुः करः वालाश्च यस्याः । मनोजातभयं मदनभयमिति । वसिष्ठकलत्रमरुन्धतीत्युपहासः । **वचसेति** । रतिर्निधुवनम् । पक्षे—मदनभार्या । प्रतिपालयति प्रतीक्षते । वातोज्जीविनी 'वावडी' इति भाषा । **सुन्द इवेति** । मारीचो मरीचिपुत्रः कश्यपः । पक्षे—सुन्दो दैत्यभेदः । मारीचस्तु तत्पुत्रः । 'संज्ञा स्यात्सूर्यभार्यायां गायत्र्यां चैव नामनि । चेतनायां च हस्ताद्यैः सूचनायां

कलितसुरसभावां चारुमैत्रीं सुवर्णां
ललिततरपदां तां चिन्तयन्राजपुत्रीम्।
कृतिमिह वरकान्ताकामुको वेङ्कटेशः
कविरिव न च निद्रामाप स श्रीनिवासः॥ २७॥

इति श्रीवेङ्कटेशकविविरचिते श्रीनिवासविलासे पूर्वभागे द्वितीय उच्छ्वासः।

---

तृतीय उच्छ्वासः।

अथ कथंकथमपि विरहवेदनाभूयिष्ठं कालं यापयति भगवति श्री-श्रीनिवासे कदाचित्कुवलयेष्वसंकोचकरप्रसारे चक्रानुरागरहिते भूप इव निष्प्रभत्वं गतवति चन्द्रे, पतिव्रतोचितव्यापारायामिव कृतनिजनायकानुगमनायां यामवत्याम्, अलमस्माकं कलङ्किनोऽस्य राज्ञः सेवाजनितचलसुखेनेतीव विष्णुपद एव तत्क्षणं लीनेषु नक्षत्रेषु, इयमेव प्राप्तकालप्रतिक्रियास्माकमिति विचिन्त्येव वन एव मुद्रितमुखं निवसत्सु तत्परिग्रहेषु नीलोत्पलेषु, राजहंसतयोभयपक्षसमाना वयमितीव निःशङ्कं संचरत्सु कादम्बेषु, सुमनोवृत्तिशोभितानां किं भयमस्माकमितीव सरलित-

---

च वस्तुनः॥' इति लिङ्गभट्टः। मरीचिः किरातः। पक्षे ऋषिभेदः। करः किरणः। पुष्करं पद्मम्। पक्षे—शुण्डाग्रम्। छाया सूर्यप्रिया। पक्षे—अनातपः। कलितेति। कृतिं ग्रन्थम्। इति श्रीधरणीधरविरचितायां श्रीनिवासविलासचम्पूटीकायां पूर्वभागे द्वितीय उच्छ्वासः।

---

भूयिष्ठं पूर्णं यथा स्यात्तथा। असंकोचबलिप्रसरणं नाम एकनिष्कग्रहणस्थाने निष्कद्वयग्रहणम्। 'कलङ्कोऽङ्कापवादयोः' इत्यमरः। विष्णुपदमाकाश इवेत्युत्प्रेक्षा। 'वने सलिलकानने' इत्यमरः। 'पत्नीपरिजनादानमूलशापाः परिग्रहाः' इति च। कादम्बा हंसाः। राजहंसा राजश्रेष्ठाः। उभयमित्रसमानाः। यथा बलभद्रो भीमसुयोधनयोर्युद्धं दृष्ट्वा प्राह—'एकं प्राणाधिकं मन्ये उतान्यं शिक्ष-

ग्रीवं गायत्सु मिलिन्देषु तदेकशरणेषु द्विजेषु, पुनस्तदुदयमाकाङ्क्षमाणेष्विव तपस्वितां प्राप्तेषु चकोरेषु, गतेऽपि स्वामिनि धैर्यत्यागो नोचित इति निश्चलप्रकृतितयेव न द्रवत्सु चन्द्रकान्तमणिषु, विरामसमयोज्जृम्भमाणकोकशोकानलप्रभापटलैरिवारुणदेहकान्तिजालकैः शोणीकृतासु दशदिशासु, पद्मिनीनामयं विकासकाल इति ज्ञापयन्तीष्विव विकसन्तीषु कमलिनीषु, उद्घाटयत कपाटं परिष्कुरुत वीथिकां बध्नीत वन्दनमालिकां सत्कुरुत शरीराणि किं न जानीथायमयमागत एव भगवांश्चित्रभानुः पुरस्कृतस्वभानुस्तं संतोषयतेति प्रकम्पितवेत्राग्रेषु स्वाधिकारानुरूपमाचरत्सु भटेष्विव तत्रतत्र संचरत्सु प्राभातिकदरफुल्लकमलसंसर्गकषायपवमानपोतेषु; अभ्युद्यतपुण्डरीकश्रीश्चामरश्लाघ्यविभवः परमुदितमत्तसारङ्गसहस्रपत्रः पूर्वतनं दोषाकरं राजानं निर्जित्य अपर इव भूपः शूराख्यातिरमणीयः प्राप्तमहोदयः परिष्कृतानन्तः सकलजगत्सुकर्मपरिपाक इव मूर्तिमांस्त्रयीमूर्तिस्तेजोभूमा पूर्वदिग्लावण्यसीमा शनैः शनैरुल्ललास ।

---

याधिकम्' इति श्रीभागवतम् । 'पक्षः सहायगरुदन्तिकसाध्यभित्तिमित्रेषु चुल्लिविवरे नृपकुञ्जरे च' इति रत्नमाला । एकोऽर्थः । राजतया चन्द्रतया हंसतया सूर्यतया च । चन्द्रपक्षः सूर्यपक्ष इति पक्षद्वयसमाना इत्यपरोऽर्थः । राजहंसाः पक्षिणो गरुद्द्वयसमाना इत्यन्योऽर्थः । 'राजहंसास्तु ते चञ्चुचरणैर्लोहितैः सिताः' इत्यमरः । 'तपस्वी तापसे चानुकम्प्ये च' इति । निश्चयप्रकृतयः सधैर्यमन्त्रिणः । न द्रवत्सु न पलायत्सु इति च । तत्त्वार्थस्तु जडस्वभावात्त्यक्तद्रवीभावेषु । 'प्रकृतिर्गुणसाम्ये स्यादमात्यादिस्वभावयोः' इति । दीपादेर्विरामसमये प्रकाशाधिक्यं दृष्टम् । पद्मिनीजातिस्त्रीणां प्रातःकाले सुरतेच्छेति कविसमयः । 'वन्दनमाला तु तोरणं परिकीर्तितम्' इति । चित्रभानुः सुभानुश्च संवत्सरभेद इति चमत्कारः । सूर्यः सुकिरणः इति तत्त्वार्थः । 'कटुतिक्तकषायास्तु सौरभ्ये परिकीर्तिताः' । अमराः । अनन्तमाकाशमिति तत्त्वार्थः । 'चमत्कारस्तु श्वेतं छत्रम्' । चामरः । पत्त्रं वाहनम् । अनन्ता भूमिरिति । 'पुण्डरीकं सिताम्भोजम्' इत्यमरः । 'सुभटे शूरः सूर्ये

ततश्चान्तिपुष्करिणीयं नृसिंहजयन्तीयमिति कथ्यमानसंकल्पानां तीर्थोपजीविनाम्, क मे करालवः क मे बृसी क मे कक्षपेटिकेति जल्पतां शिष्टद्विजातीनाम्, प्रभातस्नानसमयव्यग्रेषु जनेषु वस्त्रं भाजनं वा मुषित्वाद्यैव दीयते पणशेषमिति सांत्वय्य तन्मातरं तत्कालहृतयज्ञोपवीतयाचकानां चेटिकारतदरिद्रौदनिकद्विजविटानाम्, अत्रैवं पाठः अस्यायमर्थ इति तारतरं पठतां मासपौराणिकानाम्, मह्यं न दत्तं मह्यं न दत्तमित्याक्रन्दतां गर्भयाचकानाम्, जातं जातमिति वाद्यमानकरतालिकानां कृपणास्तिकधनिकानाम्, त्यज मार्गं जल एव विस्मृता श्रीमुद्रा हा वनितोपरि पतसि वराकेण मार्गो दूषितः प्रतिपालय मदागमनं विज्ञातेव ते शिष्टता इत्यादिप्रकारेण वदतां जनानां भगवत्याः सुवर्णमुखर्या उभयतटोज्जृम्भमाणकोलाहलेनोद्बुद्धः यथाविधि स्नात्वा

गिरिसानुग्रहत्वं च वसुमत्ता च तादृशी ।
यस्य मैत्री जगत्सारा न वन्द्यः कस्य वा रविः ॥ १ ॥

इति मनस्यालोच्य नमस्याकर्मीकृततपनमण्डलो राजकन्यावियोगदूयमानमनाः केनचिन्मरालकनामकेन नर्मसुहृदा सह यद्यत्र हारितं तत्तत्रैव मृग्यमितीव तमेव वनोद्देशमुपाजगाम श्रीनिवासः ।

---

च दन्त्योऽपि' इत्यूष्मविवेकः । 'उदयः पर्वतोन्नत्योः' इति । भूमा पूर्णः । **ततश्चेति** । अन्तिपुष्करिणी तिथिभेदः । करे धार्या आलवः करालवः । 'कर्कर्यालुर्गलन्तिका' इत्यमरः । 'गिण्डी' इति भाषा । 'कक्षः स्मृतो भुजामूले' इति । 'भरण्यं भरणं मूल्यं निर्वेशः पण इत्यपि' इत्यमरः । 'सूदा औदनिका गुणाः' इति च तारतरमुच्चैः । विधिमनतिक्रम्य यथाविधि । विधिः प्रकारः । **गिरीति** । गिरिवाचि अनुग्रहसहितत्वमिति चमत्कारः । पर्वतप्रस्थसंबन्धि ग्रहत्वमिति तत्त्वार्थः । देवभेदेऽनले रश्मौ वसू रत्ने धने वसु' इति । 'तीक्ष्णरश्मौ च सुहृदि मित्रं स्याच्छत्रुस्वान्नवौ' इति । यस्यां वेलायाम् 'नेक्षेदुद्यन्तमादित्यम्' इति स्मृतेः उदितभू-

तस्यां वेलायामुदितभूयिष्ठमालोक्य रविबिम्बमाह मरालकः—'वयस्य माधव,

क्रमेण चक्रं संयोज्य भित्त्वा श्रीवासकोशकम् ।
जेतुकामः कुवलयं सूर्यस्त्वमिव निर्गतः ॥ २ ॥

अपि च ।

सिन्दूरैरपि शङ्कितं च घुसृणैः स्रस्तं च काश्मीरजै-
र्विभ्रान्तं कनकोत्करैः शिथिलितं त्रस्तं कुसुम्भैरपि ।
किंचानम्य निरीक्षितं तव जगद्वन्द्यः प्रतापाङ्कुरैः
सर्पत्यद्य नभःस्थलेऽम्बुजसुहृद्भासां विलासो मुहुः ॥ ३ ॥

इतः किंचित्पश्यतु देवः ।

सत्रं कोककुलस्य हंससमितेर्दोलां प्रपाजालकं
भृङ्गाणामतनोः कलम्बनिचयं धातुः परं मन्दुराम् ।
पर्यङ्कं च वियोगिनीजनततेर्गेहं रमायाः सरो-
जालिं सत्कुरुते करैर्दिनकरः काश्मीरजन्मारुणैः ॥ ४ ॥

---

यिष्ठमित्युक्तम् । पूर्णोदितमित्यर्थः । क्रमेणेति कामशास्त्रोक्तक्रमेण । चक्रं चक्रवाकम् । श्रीनिवासकोशकं पद्मकुड्मलम् । कुवलयं पुष्पभेदः । पक्षे—श्रीनिवासेति श्रीनिवाससंबोधनम् । कोशकमर्थौघम् । 'श्रीनिवासो वृक्षभेदे पङ्कजे पीतवाससि' इति । 'कोशः खड्गपिधाने स्यात्कुड्मलेऽर्थौघदिव्ययोः' इति । सिन्दूरैरिति । स्वर्णे पीतत्वं लोहितत्वं चेति कविसमयः । तेन रविकिरणसादृश्यं युज्यते । आनम्येत्यनेन प्रतापस्य भानुबिम्बादप्यूर्ध्वदेशाश्रितत्वमुक्तम् । अङ्कुरैरित्यनेन बाल्य एवैतादृशमहिमान्वितत्वं किं पुनः प्रागल्भ्य इति भावः । 'काश्मीरजन्माग्निशिखम्' इत्यमरः । घुसृणं ललाटे धार्यम् । सत्रमिति । सत्रं सदादानमिहेरितम् । दोला रज्जुनिर्मितमालाकारवृक्षस्कन्धादिबद्धवसन्तकालविहारसाधनीभूतद्रव्यभेदः ।

त्वत्प्रतापभयात्सूर्यो दिङ्मूढोऽभून्न चेत्कुतः ।
जेतुकामः कुवलयं पुष्करस्थानमाप्तवान् ॥ ५ ॥

अपि च ।

स्थाप्यश्चन्द्रश्च रमाचलदुर्ग इतीव वक्तुमब्जाली ।
कान्तं निरीक्ष्य भानुं मुखमुद्रां त्यजति तत्करस्पृष्टा ॥ ६ ॥

यद्वा ।

चन्द्राब्जयोर्मिथो द्वेष इति मिथ्यान्यथा कथम् ।
चन्द्रे विष्णुपदे लीने तस्य श्रीः कमलं गता ॥ ७ ॥

इति । तच्छ्रुत्वा किंचित्स्मितमुखस्थमेव प्रदेशं प्राप्तः, यत्र सा दृष्टा मदिरेक्षणा । आगत्य च कमलचन्दनसंसर्गतिक्तसमीरसंस्पर्शवर्धितानङ्गव्यथः । स्वगतम् ।

पद्मिनि किमिति क्रीडसि मधुपैर्लज्जालवोऽपि न हि किं ते ।
हर हर विस्मृत्योक्तं क्व नु लज्जा सवितृरक्तायाः ॥ ८ ॥

धिक्ते पल्लवरागं सौरभ्यं भ्रमरहृद्यतां चापि ।
पापे चन्दनलतिके जरठभुजङ्गेन परिवृता यस्मात् ॥ ९ ॥

---

मन्दुरा वाजिशाला । **त्वत्प्रतापेति** । उत्पलस्थानं विहाय कमलस्थानगमनाद्दिङ्मूढत्वं सिध्यति । तत्त्वार्थस्तु आकाशस्थानम् । **चन्द्राब्जयोरिति** । विष्णुपदे नारायणचरणे लीने मग्ने । मुक्ते सतीति यावत् । श्रीः संपदिति चमत्कारः । यस्मिन्कस्मिंश्चियोगिनि प्रारब्धं पुण्यं पापं चानुभूय प्राप्तमोक्षे तस्योर्वरितं प्रारब्धेतरत्पुण्यं सुहृदः, पापं द्विषः प्राप्नुवन्तीति सच्छास्त्रप्रक्रिया । 'सुहृदः साधुकृत्यां द्विषतः पापकृत्यामिति तस्मादात्मज्ञं ह्यर्चयेद्भूतिकामः' इति श्रुतिः । अत एव द्वेषाभावः अङ्गीकार्य इति भावः । तत्त्वार्थस्तु—आकाशे । अदर्शनं प्राप्ते । श्रीः शोभा । तिक्तः सुरभिः । **पद्मिनीति** । 'पद्मिनी पद्मसंस्थाने स्त्रीविशेषे सरोम्बुजे' इति । **धिक्त इति** । विटानुरागम् । मनोज्ञत्वम् । कामुकहृद्यत्वम् । वृद्धविटेनेत्यन्यापदेशः । तत्त्वार्थस्तु सुगमः । चारुत्वमपि सौरभ्यमिति ।

तपस्याराधनं हित्वा मधुना प्राप्तविक्रियः ।
को वा न मन्दतामेति तत्रोदाहरणं मरुत् ॥ १० ॥

इति चिन्तयन् । 'देव, अत्र चाखण्डलतासंगता इन्द्रा इव, कनकका- लिकामहिता दुर्जना इव, बहुलतालसच्छोभाः संगीतक्रमा इव भूभागाः । इत उत्तरतो नास्तबकस्तटाको लतामण्डपश्च । बहुचित्रको वृक्षपूगः क्रीडाशैलश्च । विलसद्रुचितः पुष्पप्रकरः पक्षिनिकुरम्बं च सुखयति । इतः पश्चिमतो वनिताजन इव चलद्लकः सप्तपर्णः । तव शत्रुरिव सोद्वेगः पूगवृक्षः' इति वदतो मरालकस्य वचनमनाकर्ण्यैव 'मयात्र मृगयाश्रान्तेन स्थितम् । अत्र कोऽपि नयनानन्दोऽनुभूतः । तदधुनापि निधुवनलीलेव खञ्जरीटानां रञ्जयति लोचनलोभनीया मानसं कस्या- श्चन चरणालक्तरसमुद्रिता भूमिरित्यालोचयन्नेव कस्मिंश्चिल्लतामण्डपे निषसाद । मरालकस्तु 'अये, किमिदं निसर्गमधुरोऽपि देवो मनागपि मदुक्तिं नान्तर्वर्तयति । न सस्नेहं पश्यति । न सस्मितं भाषते । न वनभूमिमनुमोदते । न मन्दमारुतमनुकम्पते । तदत्र किं मया स्खलितं भवेत् । भवतु तावत् । संभाषयामि । को गर्वः प्रभुपादोपजीविनाम् । किं शाठ्येन मित्रधर्मानुगतानाम् । कावमानगणना धनिकाराधकाना- मित्यालोच्य पुनः प्राह—'देव, अत्र

---

**तपस्येति** । तपस्या तपः । मधुना मद्येन । मन्दता मूढत्वमिति चमत्कारः । तपस्यः फाल्गुनिकः । चैत्रेणापटुत्वम् । **देवेति** । अखण्डलता । पक्षे—आखण्डलत्वम् । सुवर्णकलहेच्छाहिताः । पक्षे—चम्पककोरकमहिताः । लता । पक्षे—तालः । अस्त- बकपक्षी न । पक्षे—गुच्छरहितो न । 'आश्चर्ये व्योम्नि किर्मीरेऽप्यालेख्ये चित्रमि- ष्यते । गोडुम्बायामाखुपर्ण्यां चित्रा' इत्यादि लिङ्गभट्टः । द्रौ वृक्षे चितो व्याप्तः । पक्षे—रुचितः कान्तितः विलसत् । अलकः कुन्तलः । पक्षे—दलं पर्णम् । 'सप्त- पर्णो विशालत्वक्छारदो विषमच्छदः' इत्यमरः । उद्वेगो व्यथा । पक्षे—क्रमुकफ-

संमुग्धालिपरिष्कृताब्जवदनं गत्युल्लसद्धंसकं
राजच्चन्दनचारुचित्रतिलकं पुंनागभाग्यास्पदम्।
रम्भोरुश्रि समल्लिकाक्षगतिकं सत्पल्लवोल्लासितं
रम्यं राजशिखामणे समदनं'

इत्यर्धोक्त एव तदभिमुखीभूय 'वयस्य मरालक, क्वास्ते' इति सस्पृहानन्दस्मितं पृच्छति श्रीनिवासे

'श्रीमद्वनं दृश्यते ॥ ११ ॥'

इति तच्छेषं पपाठ। तदाकर्ण्य 'सखे, 'स्त्रीरत्नमास्ते पुरः' इति न कथितं भवता। तदधुना किं श्रीमद्वनेन ह्रीमज्जीवनेन वा कृत्यमिति कथयन्नेव बाष्पनिरुद्धनयनयुगलो ललाटाहितदक्षिणपाणितलो मूर्च्छित इव स हि निपपात।

अथ मरालकोऽपि ज्ञातचेतोविकारबीजः 'अहो, कथमेनां दशां प्रापितः कयाचन वा अतिधीरप्रकृतिरपि देवः। तत्स्त्रीरत्नं कुतो वा न भवेत्। अपि नाम सा निगलयेल्लूतातन्तुजालेनाभ्रमुवल्लभं बध्नीयादपि पटच्चरेण पृषदश्वम्। धन्या खलु भगवतः कुसुमधन्वनः प्रभावपरिपाटी। यदबलाजनादपि परिभवमनुभवन्ति पुरुषपुण्डरीकाः। तदधुना मया किंकृतेन भवितव्यम्। सर्वथा प्रज्ञाविधुर एवास्मि संवृत्तः। अत एव मृगयापरावृत्तोऽन्य इव स्थितो देवः। तत्कथमाश्वासयामि। यदि तन्मतमेवानुसरामि तर्हि स्वभावतो व्यसनिनो मत्प्रोत्साहनं ज्वरितस्य

---

लम्। 'घोण्टा तु पूगः क्रमुको गुवाकः खपुरोऽस्य तु। फलमुद्वेगमेतस्य' इत्यमरः। यत्र खञ्जननिधुवनं तत्र निधिरिति लोकवादः। **संमुग्धेति**। अलिर्भृङ्गः। अब्जस्य वदनम्। पक्षे—आलिः सखी। चन्द्रवन्मुखम्। 'मल्लिनैर्मल्लिकाख्यास्ते' इत्यमरः। 'पल्लवोऽस्त्री किसलये विटपे शृङ्गारयोरपि' इति। **अथेति**। 'हेतुर्ना कारणं बीजम्' इत्यमरः। 'लूता स्त्री तन्तुवाय्योर्णनाभमर्कटकाः समाः'

जलसेक इव विषमां दशां प्रापयेद्वस्त्वलाभे तूभयलोकभ्रष्टताम् । यदि वा निषेधयामि तर्हि सद्य एव प्रणयप्रसरभङ्गः । सर्वथा नमोऽस्तु धात्रे । येनायं निर्मितः स्नेहपाशः । येन बद्धः पुमान्नेशः स्वगात्राणां चालनेऽपि । सूक्तमिदं केनचित्—

> दीपे वा तैले वा पतति पतंगो विनश्यति क्षिप्रम् ।
> अत एव भणामि सखि स्नेहो वह्नेर्न किंचिदप्यूनः ॥ १२ ॥

इति । 'भवतु तावत् । एनमन्यतो नयामि' इति संचिन्त्याह—'देव धीरप्रकृते, इतः किंचिदविदूरत एव सुवर्णमुखरी । तामनुसृत्य स्मर-शरजर्जरितमानसमाश्वासयतु देवः । यतः ।

> उत्फुल्लकेसरावलिविलसत्कमलालिपुण्डरीककुलम् ।
> भ्राम्यच्चक्रकदम्बं तद्वनयुगलं न कस्य मोदाय ॥ १३ ॥

इति । तदनु श्रीनिवासोऽपि 'वयस्य मरालक, सायंतनसमयदलदिन्दी-वरदामकोमलेन तत्कटाक्षेण विद्धस्य मम हृदये व्रीडा सुजनता गाम्भीर्यं धैर्यमन्यत्किंचिदपि वा महत्त्वाव्यञ्जकं न तिष्ठति तत्किमपि सूक्तमसूक्तं वा मा कथय । न प्रभुरसि मनसः' इति कथयन्साभ्यसूय इव तूष्णींबभूव ।

तदा मरालकोऽपि 'अये वराकेणानेन मदनपिशाचेन विरहव्यथा-गिरिशिखरस्थलीमारोपितो देवः । तथा हि । न बध्नाति रतिं तल्पे

---

इत्यमरः । अभ्रमुवल्लभमैरावतम् । पटच्चरं जीर्णवस्त्रम् । पुण्डरीका व्याघ्राः । पुरुष-श्रेष्ठा इति यावत् । 'विधुरं तु प्रविश्लेषे' इत्यमरः । सूक्तं सुष्ठुभाषितम् । **दीपेति** । स्नेहः प्रेमेति चमत्कारः । तैलमिति तत्त्वार्थः । **उत्फुल्लेति** । जलं काननं च वनयुगलम् । केसरः किंजल्कः । चक्रमावर्तः । पक्षे—वृक्षभेदः । कमलः कुरङ्गः । पुण्डरीको व्याघ्रः । चक्रवाकः । **तदा मरालकोऽपीति** । शुक् शोकः ।

शिल्पे च । न सुखयन्ति वीणाः प्राणाश्च । न स्पृहयति राज्याय भोज्याय च । अपि च । अङ्गीकरोति बाधिर्यं न माधुर्यम् । संकुचिता वाक् न शुक् । विस्मृतं चातुर्यं न कातर्यम् । गता स्फूर्तिर्न चार्तिः । वर्धितं व्यसनं न हसनम् । क्षीणा रुक् न मनोरुक् । उपचिता बाधा न क्षुधा । तदत्र दैवमेव शरणं मम मन्दभाग्यस्य । सत्यमाह भगवान्मुरमथनः—

रिङ्गत्तरङ्गचलदम्बुजकोशनिर्य-
त्किंजल्कगन्धभरवासितवातपोताः ।
कंदर्पबाणगणभिन्नहृदः क्षते मे
क्षारस्य रीतिमधुना कलयन्ति हन्त ॥ १४ ॥ इति ।

यतः ।

पुण्ड्रेक्षुचापवरसंगतभृङ्गमौर्वी-
निर्यन्मरन्दविषरूषितपुष्पबाणम् ।
कामस्य सोऽथ सहते परिरम्भलग्न-
कान्ताकुचाग्रहरिचन्दनकङ्कटो यः ॥ १५ ॥

अस्त्वेतत् । दैवं मदन इव मां मध्याह्नसमयोऽतितरां बाधते ।

प्रायेण तृषितोऽर्कोऽपि सलिलं पातुमिच्छति ।
अन्यथा पुष्करस्थानं प्राप्नुयादर्यमा कुतः ॥ १६ ॥

---

'व्यसनं विपदि भ्रंशे दोषे कामजकोपजे' इत्यमरः । रुक्कान्तिः । पक्षे—रोगः । **रिङ्गदिति** । वासितं सुरभीकृतम् । **पुण्ड्रेक्ष्विति** । 'रसाल इक्षुस्तद्भेदाः पुण्ड्र-कान्तारकादयः' इत्यमरः । 'उरश्छदः कङ्कटको जगरः कवचोऽस्त्रियाम्' इति च । **प्रायेणेति** । पुष्करं जलमिति चमत्कारः । आकाशमिति तत्त्वार्थः । **निर्य-**

तदिदानीम् ।

निर्यन्मारन्दधारामिलदलिपटलीगीतमाद्यत्कुरङ्गं
छायामायाभ्रनृत्यच्छिखिकुलमसकृत्कोकिलालापहृद्यम् ।
वेल्लन्मल्लीप्रसूनप्रसृमरललितामोदसंवासिताशं
नीडक्रीडद्द्विजालिं प्रसवभरनतं तं रसालं भजामि ॥ १७ ॥

इति संचिन्त्य इतस्ततः संचारितचक्षुः कामपि वनोद्देशे संचरन्तीं बाललोललोलम्बाङ्गनां विलोक्य ।

'पुंनागगण्डतलचुम्बनलोलचेतो-
वृत्तिर्जहासि नितरां कनकाभिलाषम् ।
श्यामे भ्रमद्भ्रमरराजिमनोहरे त्व-
मा चन्द्रतारमवनौ जय जीव मुग्धे ॥ १८ ॥'

इति यावद्वदति तावदेव यदृच्छया कयाचन वनितया तेनैव मार्गेण क्वापि गच्छन्त्या समाकर्ण्य आभुग्नकण्ठं कोऽयमिह धन्यो मामाशिषा वर्धयति पृच्छामि तावदित्युपसर्प्य 'भद्रमुख, को भवान्महानुभाव इति ज्ञातुमिच्छामि' इति तया सादरं कृताञ्जलिपुटयोक्तः साश्चर्यम् 'चपलाक्षि, अस्याम्रतरोरावालभरणीभव क्षणम् । श्रान्तासि । अहमपि कश्चित्पान्थः । कासि त्वम् । क्व यासि । किं ते पाणौ' इति तामभिधाय तयापि तत्कालरूढपरिचयया तथास्त्विति जल्पन्त्या

---

दिति । छायैव मायाभ्रं कपटमेघः । द्विजाः पक्षिणः । ब्राह्मणा इत्यर्थान्तरम् । प्रसवं फलं पुष्पम् । पुत्र इत्यर्थान्तरम् । 'प्रसवो जनतानुज्ञापुत्रेषु फलपुष्पयोः' इति । **पुंनागेति** । गण्डः कटः । भृङ्गचम्पकयोर्वैरमिति कविसमयः । श्यामा नीलवर्णा इति भृङ्गीपक्षे । स्त्रीपक्षे–गण्डः कपोलः । रत्यभिलाषे सति वनिता वेश्या स्यादतो जहासीत्युक्तम् । 'श्यामा स्त्री मुग्धयौवना' इति । भ्रमरः कामुकः ।

छाया न्यग्रोधसाले परिमललहरी चन्दने किंशुके स-
त्पौष्पी शोभा फलश्रीरपि खलु कदलीवृक्षवाटीषु लभ्या ।
किं तैरेकैकसंपत्परिकलनचणैः सर्वसंपत्समृद्ध
क्षोणीमन्दार चूतद्रुम तव गरिमा मद्गिरामप्यभूमिः ॥१९॥

इति रसालद्रुमस्तवनव्याजादात्मानं स्तुवन्त्या सह तत्रैव क्षणमतिष्ठत् ।

इतो देवोऽपि 'अहो किमिति वक्तव्यम्, यदियं कल्याणी मत्प्रेमभरं न जानाति' इति त्रिभुवनचातुर्यनिधावस्थानदोषारोपः । ज्ञात्वापि तूष्णीं तिष्ठतीति न तादृशो जीवः । ज्ञात्वा ज्ञात्वा वा किमिति प्रकृतविरुद्धालापः । 'अद्य श्वो वा सफलो भवेन्मे मनोरथः' इति तावन्निःसरन्ति प्राणाः कंदर्पहतस्य तदैव स्पष्टं न निवेदितमित्यधीरतालाघवम् । कस्मैचिन्निवेद्य सुखीभवामीति चरणलग्नकण्टकचालनरीतिः । अलमेतदनुरागेणेत्यरसिकता । दैवमेव शरणमिति साधारणसरणिः । सप्रयत्नेन भवितव्यमिति पिष्टपेषणन्यायः । मदनादीनेव शिक्षयामीत्यकाण्डताण्डवविधिः । एतदुभयत्रापि सममिति चातुर्याभासः । देहं त्यजामीत्यबुधचरणानुचरणप्रसङ्गः । किं च ।

निद्रा न याति नयनं व्याधत्रस्ता मृगीव कान्तारम् ।
अचला न चित्तवृत्तिर्नौका नुन्नेव वायुना जलधौ ॥ २० ॥
रागस्तीव्रं प्रसरति सुगुणो गुणिनां यथा लोके ।
आवेगः शीघ्रतरः प्रतिभाक्रमवत्कवीन्द्राणाम् ॥ २१ ॥

---

**छायेति** । चणः समर्थः । अभूमिरस्थानम् । **इतो देवोऽपीति** । अकाण्डताण्डवमनवसरनर्तनम् । 'काण्डोऽस्त्री दण्डबाणार्ववर्गावसरवारिषु' इत्यमरः । चातुर्यवदाभासमानः । तारः कपिभेदः । तरुहरिणाः कपयः । उत्तरः श्रेष्ठः । बृहत्सुवर्णश्रवणाभरणाश्च हारवन्तश्च ये नरास्तैरुपचिताधिकीकृता कीर्तिगणना यस्य । पक्षे—उत्तरो विराटपुत्रः । द्रोणभीष्मराधेयाभरणापहारकार्जुनोपचितयशोयुद्धः ।

इत्यात्मन्येवालोचयन्मदनवेदनातिरस्कृतेतरवेदनो मनःकल्पितां तां कान्तां स्वसमीपमागतामिवाकलयन् प्रसारितबाहुयुगल आलिङ्गितुमिच्छन् तत्र किमप्यदृष्ट्वा 'अये, वञ्चितोऽस्मि मदनहतकेन यौवनेन दैवेन वामेन वा। अथ वा स्मृतेरेवापराधः। यया नेयं वनितेति ज्ञापितम्। तथा हि।

ईषद्धासतरङ्गिताधरपुटोन्मीलन्निषेधाक्षर-
श्रेणीसूचितरागसागरमिलल्लज्जानदीप्रक्रमाम्।
क्रोडे तां प्रणिधाय चुम्बितुमुपक्रान्तेऽथ कान्तामणिं
मय्यानन्दयुते विघातमकरोत्काचित्स्मृतिः पामरी ॥ २२ ॥

इति चिन्तयन्स्थितः। तिष्ठत्वेतत्। इतः सापि स्ववृत्तान्तं वक्तुमारभत।

ज्ञात एव किलानस्तमितामितमतिसमस्तलोकस्थितसभास्तारसंस्तुतनिखिलवस्तुविस्तारस्तार इव तरुहरिणकुलोत्तरः उत्तर इव गुरुगाङ्गेयकर्णभूषणहारिनरोपचितकीर्तिसंख्यः संख्यावानिव सुरसभावमतिदक्षः दक्षिणेष्वक्षीणाक्षिसंमददायी द्रविडो नाम देशः। यत्र च निरन्तराक्षरामृतानन्दितजगतां गवां ब्राह्मणानां च परिपालनेनामृतजीवनानां देवानां द्विजानां चाशिषा गोत्रानन्दकोऽप्यगदः सुखेन जीवति लोकः। तथा हि।

---

'मृधमास्कन्दनं संख्यम्' इत्यमरः। 'गन्धस्पर्शसंख्य–' इति तार्किकाणां पाठः। 'गाङ्गेयः स्यात्पुमान्भीष्मे क्लीबे स्वर्णकसेरुणोः' इति। सुरसभा देवसभा। अवमतिरवमानः। पक्षे–'संख्यावान्पण्डितः कविः' इत्यमरः। शोभना रसभावमतयः। 'प्रमोदामोदसंमदाः' इत्यमरः। **यत्रेति**। नाशरहितघृतम्। पक्षे—वर्णपीयूषम्। पीयूषाशनानां यज्ञशेषाशनानां वा। 'अमृतं यज्ञशेषे स्यात्पीयूषे सलिले घृते। अयाचिते च मोक्षे च ना धन्वन्तरिदेवयोः॥' इति सुधा। गोत्रः पर्वतस्तस्यानन्दकः। अगः पर्वतस्तं द्यति खण्डयतीत्यगद इति विरोधः। कुलानन्दको रोगरहित इति परिहारः। गोत्रं नाम्नि कुलेऽचले' इति। 'व्याधिगदामयाः' इत्यमरः। तिमिरादिसप्तकं रोगभेदः। 'ध्वान्तेऽक्षिरोगे तिमिरम्' इति

तिमिरबाधा कृष्णपक्षे। पुण्डरीकोत्पत्तिः सरसि। पाण्डुकथाश्रवणं महाभारते। रोहिणीसंबन्धश्चन्द्रमसः। कुसुमपतनमालवालेषु। उष्णवायुप्रसारो ग्रीष्मे। क्षयः संवत्सरेषु। किं बहुना।

मणिः सरुग्नदीवर्गः सदा बहुलगद्गदः।
सामयश्रीरथाभाति दैत्यदानवमण्डले॥ २३॥

यत्र च। मालिन्यान्विता आरामा न रामाः। राजद्वेषिणः कोका न लोकाः। किं च। निषादादिजातिभेदसंकुलाः स्वरा इव भूधराः। चरणप्रहारमुदिता अशोका इव वीरलोकाः। तत्तादृशस्योपवर्तनस्य मध्ये अस्ति पुरंदरपुरःसरनिलिम्पजनतास्तुतसंपत्प्रपञ्चमणिमञ्जायमाननाकलोकप्रतिबिम्बायितशोभाभवनं वनमिव कमलावासस्थानम्। आस्थानं सर्वसंपदां पद्मवन्निशान्तरमणीयं लसत्सुराजन्यमप्यदृष्टसुराजन्यं नारायणपुरं नाम नगरम्। यत्र च सूर्यसोमसंततिपठिता वारा इव वीराः। वातगतिबन्धवः कुरङ्गा इव तुरंगाः। श्रीनिवासयोग्यानि वनानीव भवनानि। किं प्रपञ्चेन।

---

रत्नमाला। 'पाण्डुर्नृपे गदे श्वेतगुणे ना गुणिनि त्रिषु' इति रत्नमाला। 'गौस्तारा कण्ठरोगश्च रोहिणी' इति च। 'कुसुमं पुष्पफलयोः स्त्रीरजोनेत्ररोगयोः' इति। उष्णम्। वायुः। क्षयः। मणिरिति। सरुक् सरोगः। पक्षे-सकान्तिः। बहुलगद्गदः मिलद्रोगः। पक्षे-गद्गदो ध्वनिविशेषः। आमयश्री रोगसंपत्। पक्षे-मयो दैत्यशिल्पी। तिमिरेत्यारभ्य परिसंख्यालंकारः। **मालिन्येति**। मालिन्या मालाकारवनितया। पक्षे-मालिन्यं मलिनत्वम्। **किं चेति**। 'निषादं कुर्वते गजाः' इत्यजयः। पक्षे-किराताः। वनितापादप्रहारोऽशोकवृक्षाणां दोहदमिति कविसमयः। पक्षे-चेति भिन्नं पदम्। **तत्तादृशस्येति**। 'देशविषयौ तूपवर्तनम्' इत्यमरः। 'निशान्तपस्त्यसदनम्' इति च। **यत्र चेति**। वारः सूर्यादिदिवसः। वायोर्वाहनं कुरङ्ग इति कविसमयः। श्रीनिवासः पद्मम्।

प्रजारञ्जनं वीक्ष्य राज्ञोऽस्य देशे पुरी पन्नगानां किलात्रागतेति ।
न चित्रं प्रियाभोगिनां सा यतस्तद्भुजङ्गाः पुराणप्रसिद्धा बभूवुः ॥२४॥

तत्र चास्ति प्रशस्तप्रतापज्वालावलीकवलितनिखिलाहितजन्यनिर्जितसौजन्यवर्जितराजन्यवनिताजननयननीलनीरजमालाविशृङ्खलगलदश्रुधारानदीमातृकायमानभुवनश्लाघितयशःप्रसरः सर इव सुनायकगुणमणिः मणिरिव सन्मालामध्यस्थितो राजा लसत्याकाशराजो नाम ।

यश्च युधिष्ठिर इवानन्तविजयघोषमुखरितदिङ्मण्डलः । अर्जुन इव देवदत्तसंपत्तिरस्कृतसुरासुरः । जरासन्ध इव भीमयुद्धविशारदः । यस्मिन्रक्षति क्षितिं द्वन्द्वं युग्ममेव । विग्रहो देह एव । कलिर्युगमेव । किं पल्लवितेन ।

प्रलम्बता हलिद्वेषिण्यसुरेऽपि सुरेऽपि च ।
पयोधरयुगे नैव रमणीनां कदाचन ॥ २५ ॥
शंकरः पुरुषेष्वग्रः स्त्रीषु चण्डी नगात्मजा ।
कुमारेषु महासेनस्तारकानन्दघातुकः ॥ २६ ॥
स हि राजहंसमण्डलघनाश्रयः स्पर्शनोद्भवनिदानम् ।
कल्याणशब्दगुणयुग्राजाकाशाभिधो जयति ॥ २७ ॥

---

**प्रजारञ्जनमिति** । प्रकृष्टजारं लोकम् । भोगिनां विलासिनां प्रियाः । पुराणा वृद्धा इति प्रसिद्धा इति चमत्कारः । तत्त्वार्थस्तु—प्रजानां रञ्जनम् । सर्पाणां प्रिया भागवतादिपुराणेषु प्रसिद्धाः । **यश्चेति** । 'अनन्तविजयं राजा कुन्तीपुत्रो युधिष्ठिरः' । 'देवदत्तं धनंजयः' इति गीतावचनाद्द्वावपि शङ्खभेदौ । **यस्मिन्निति** । 'द्वन्द्वं कलहयुग्मयोः' इत्यमरः । 'विग्रहः समराङ्गयोः' इति 'कलिः स्त्री कलिकायां ना शूराजिकलहे युगे' इति सुधा । **प्रलम्बतेति** । 'प्रलम्बौ हारदानौ' इति । **शंकर इति** । चण्डी निष्कारणकोपना । पक्षे–दाक्षायणी देवी । कुमारो बालकः स्कन्दश्च । तारका कनीनिका दैत्यभेदश्च तारकः । **स हीति** । 'घनो मेघे मूर्तिगुणे त्रिषु मूर्ते निरन्तरे' इत्यमरः । 'विश्राणनं

अथ कदाचिद्वियन्नृपाल एकभार्यासक्तोऽपि प्रजारहितो नतनयापेक्ष्यपि तनयापेक्षी मदनमूर्तिमिव कमलोदराज्जातां कांचन कन्यकामलभत । ततश्च गतेषु केषुचिद्दिवसेषु

भूर्गाङ्गेयं जनयन्त्यनुदिनमवनीपतेर्मुदे भवति ।
इति सेर्ष्येव कुमारं प्रासूत तदा धरादेवी ॥ २८ ॥

चित्रमिदं शृणु ।

तोषयामास नृपतिं तत्कलत्रं धराद्वयम् ।
तत्रैका गोत्वमासाद्य महिषीभूय चापरा ॥ २९ ॥

अस्त्वेतदपि । भूयसी वेला संजाता । तत्संक्षेपतः कथयामि कथनीयमशेषम् । अन्यदा तु राजपत्नी धरादेवी प्रथमोच्छ्वसितकुसुमकलिकयेव मल्लीलतां शरत्कालकलयेव राकानिशां निलिम्पतरङ्गिण्येव हरचन्द्ररेखां नवनवोन्मेषशालिबुद्ध्येव कविकृतिं विनयसंपदेव विद्यां अभिनवयौवनोद्धत्या राजमानां तनयां विलोक्य 'इयं किल विवाहयोग्या जाता । अस्या मानसकासारमिव तुच्छीकृतसकलसरोजातम्, गणिका-

---

वितरणं स्पर्शनम्' इति च । पक्षे—स्पर्शनो वायुः । 'आकाशाद्वायुः' इति श्रुतिः । 'शब्दगुणमाकाशम्' इति तर्कशास्त्रम् । **अथेति** । प्रकृष्टजाराणां हित इति विरोधः । प्रजया संतत्या रहित इति परिहारः । नतनयेति शब्दतो विरोधः । नतो-नम्रश्च नीतिशास्त्रापेक्षावांश्च । पद्मावती पद्मोत्पन्नेति पुराणम् । **भूरिति** । गाङ्गेयं कुमारं षण्मुखं (स्वर्णं) चेति चमत्कारः स्वर्णं । पुत्रमिति तत्त्वार्थः । 'कुमारस्तु शुके स्कन्दे वयु राजेऽश्ववारके । बालके वरुणाद्रौ ना न द्वयोर्जात्यकाञ्चने ॥' इति सुधा । **तोषयामासेति** । भूमिः, धराभिधाना वनिता चेति धराद्वयम् । धेनुत्वं सैरिभीत्वमिति चमत्कारः । भूमित्वं नृपपत्नीत्वमिति तत्त्वार्थः । **अन्यदा त्विति** । सरोजातं पद्मं कासारकदम्बं च । रेखा लक्षणव्यञ्जका चित्ररेखा च ।

समूहमिव रक्ताशोकनवपल्लवोल्लसितम्, अनिरुद्धमिव चित्रलेखालंकृतं पाणिं गृहीतुं कः पुमान्कृतसुकृतराशिर्वर्तत इति न जाने । न केवलं मनुष्येष्वपि, किं तु देवेष्वपि । यतः इन्द्रो भूभृज्जातानाप्तः, सूर्यस्तु हंसः, 'चन्द्रस्त्वेकहस्तश्रवणः' इत्यालोच्योत्तुङ्गसौधगतमणिमञ्चिकायामुपविष्टः प्रसन्नचन्द्रमण्डलमवेक्ष्य

'दिष्टेन दत्ता सा शोभा चन्द्रं प्राप्य लसत्यलम् ।'

इत्युक्त्वा किंचिद्धसन्तमाकाशभूपमासाद्य प्राप्तावसराभणद्देवी—

'पित्रा दत्ता यथा कन्या प्राप्येव सदृशं वरम् ॥ ३० ॥

इति । ततश्च देवोऽपि किंचित्तरलितमस्तकं प्राह—'देवि, सत्यमेतत् । मयापि ज्ञातं पुरैव । किं तु सरस्वत्या इव प्रवालकरायास्तव नन्दिन्याः सदृशो वरः क इति चिन्तयन्नपि न निश्चयं प्राप्नोमि देवेष्वपि, किं पुनर्मनुष्येषु । यतः शेषः पूषा च सदारदः । इन्द्रः समुद्रश्च नीरसानन्दः । अस्त्वेतत् । तरुणि, स्वशत्रोरपि कन्या मा भूत् । पश्य ।

मुग्धे भूतेशभूतेशशिरोमण्योस्तु को वरः ।
श्लाघ्यो दक्षस्य धिक् कन्याताततां दुःखजीवनः ॥ ३१ ॥

इति । अथ सा भर्तृगदितमाकर्ण्य 'हंहो किमुच्यते ।

---

बाणपुत्री सखी सेति पुराणम् । भूभृज्जाता राजपुत्री । अनाप्त इति निन्दा । तत्त्वार्थस्तु पर्वतसमूहच्छिद् । संन्यासी । **ततश्चेति** । 'प्रवालोऽस्त्री किसलये वीणादण्डेऽथ विद्रुमे' इति । स इति भिन्नं पदम् । दारान्द्यति खण्डयतीति दारद इति निन्दा । तत्त्वार्थस्तु दारदो विषं तेन सहितः । 'दारदो वत्सनाभश्च' इत्यमरः । पक्षे-सदेति भिन्नं पदम् । अरदो दन्तरहितः । कदाचिच्छिवः पूष्णो दन्तानपातयदिति भागवतम् । नीरसो निर्वीर्य आनन्दो यस्येति निन्दा । तत्त्वार्थस्तु—अभूम्यानन्दः । पक्षे-नीरेण जलेन सानन्दः । **मुग्ध इति** । पिशा-

दक्षः पुण्यवतां श्रेष्ठो नो चेत्तस्य कथं भवेत् ।
एको राजा द्वितीयस्तु जामाता राजशेखरः ॥ ३२ ॥

किं च ।

दत्वा पाञ्चालिकामात्रं नरमात्राय पार्षतः ।
धर्मं गुणं च विजयमपि किं नाप भाग्यतः ॥ ३३ ॥

अतः 'सप्रयत्नेन पुरुषेण भाव्यम्, दैवं तत्सहकारि भवति' इति प्रज्ञावतां वादः । अतः परमार्यपुत्रः प्रमाणम्' इत्युक्त्वा जोषमासीत् । विरतवचनायां तस्यां देव्यां स्वयंवरमहोत्सवाय राज्ञा यतमानेन सर्वेऽपि भूतलभाजो राजपुत्रा आकारिता आजग्मुः ।

तत्र केचन शेषा इव लसन्मणिमालालंकाराः कुण्डलिनो वारुणीप्रमदाः कञ्चुकिनो रसातलं भूषयन्तो भूभृतः । केचन कैलासपतय इव सार्या वृषप्रियाः सुकुमारा अहीनमालाभरणा राजशेखराः । केचन तुहिनगिरय इव अचलसंबन्धयोग्याः रूपेण मेनकामपि मोहयन्तः अनेकशिखरश्रीविराजिताः लसत्कटकाः सपक्षनन्दना धराभृच्चक्रवर्तिनश्च ।

---

चेशेत्यादिनिन्दा । शिवश्चन्द्र इति तत्त्वार्थः । वरो जामाता । **दक्ष इति** । भूपः भूपश्रेष्ठ इति स्तुतिः । चन्द्रः शिव इति । चन्द्रोऽपि दक्षजामातेति पुराणम् । **दत्त्वेति** । 'पाञ्चालिका पुत्रिका स्याद्वस्त्रदन्तादिभिः कृता' इत्यमरः । **मनुष्यमात्रायेति** । भाग्यस्तुतिः । तत्त्वार्थस्तु—द्रौपदीम् । अर्जुनाय । धर्मम् । भीमम् । पार्थम् । अपिशब्दान्माद्रेयौ ग्राह्यौ । 'गुणः सूदे वृकोदरे' इति । 'नरो मनुष्यार्जुनयोः' इति । 'मात्रं कार्त्स्न्येऽवधारणे' इत्यमरः । 'आर्यपुत्रेति संबोध्यः पतिः पत्नीजनेन तु' इति । **शेषा इवेति** । वारुणी मद्यं तेन प्रकृष्टमदाः । पक्षे—वारुणी शेषभार्या प्रमदा वनिता येषाम् । 'रसातलं नागलोकः' इत्यमरः । 'सुकृतं वृषः' इत्यमरः । 'सुकुमारं तु कोमलम्' इत्यमरः । अहीनः सर्पश्रेष्ठः शेषः । अचलो निश्चलः । पक्षे—पर्वतः । मेनका

केचन दिग्गजा इव भद्रासनशोभावहाः शृङ्गारसुन्दराः सार्वभौमादिकसंपदश्च ।

अथ तान्राजपुत्रान्देवस्तां सभामनयत् । या खलु महाराजैरिव प्रकृतिहृदयज्ञैः दुष्पुत्रैरिव गोत्रामयैः लोलुपैरिव तीव्रकरणैः अनल्पशिल्पिवर्गैः सर्गविस्मापितविश्वकर्ममानसैर्निर्मिता ।

तस्यां किल संवर्तकालकलायामिवाम्बरमणिगणभूषितायां वरुणभार्यायामिवानन्तरत्नच्छायोद्भासितपुत्रिकादर्शनहर्षितजनचित्तायां मयूरैरिव भासुरचन्द्रकान्तैः गरुडैरिव विलसत्पतंगमणिभिः कपिभिरिव सुनीलैः प्रभातकालैरिव पद्मरागोज्ज्वलैरिन्द्रैरिव सवज्रैः वसन्तवृक्षैरिव सप्रवालैः मणिजालकैरलंकृतायां सभायां योगिष्विव दान्तेषु दानवेष्विव हिरण्यराजितेषु वनसंनिवेशेष्विव बकुलताम्रेषु क्षुद्रग्रामेष्विव दुर्वर्णप्रचुरेषु शरन्निशाकाशेष्विव चन्द्रताराभिरामेषु द्रुपदराजेष्विवानेकवरपादसमर्पितपाञ्चालिकेषु आसनेषूपविष्टे राजपुत्रकदम्बके, नटनटितशाल-

---

अप्सरोविशेषः । पक्षे—मेना पार्वतीमाता । मेनैव मेनका । अनेकशिखरश्रीरनेकाग्रसंपदिति लोकोक्तिः । पक्षे—शिखरं पर्वताग्रम् । 'कटकस्त्वद्रिनितम्बे बाहुभूषणे' इति । सपक्षनन्दना मित्रहर्षकाः । पक्षे—हिमाद्रितनयो मेनाकः । स सगरुदिति पुराणम् । भद्रासनं नृपासनम् । पक्षे—आसनं स्कन्धः । 'रसे नाट्ये च शृङ्गारः करिमण्डन एव च' इति । **या खल्विति ।** प्रकृतिः प्रकृष्टकरणममात्यश्च । भूम्यां मयो दैत्यशिल्पी । तादृक्समर्था इति भावः । अभेदस्तूपचारः । पक्षे—कुलस्यामयो रोगः । तीव्रकरणैः शीघ्रकर्मभिः । पक्षे—तीव्राण्यस्वाधीनानि करणानीन्द्रियाणि येषां ते । 'करणं कारणे कामे साधनेन्द्रियकर्मसु' इति । **तस्यामिति ।** अम्बरमणिगणः सूर्यसमूहः । पुत्रिकायां पाञ्चालिकायाम् । पक्षे—सुता । अनन्तः शेषो वरुणजामातेति पुराणम् । चन्द्रकान्तादयः पञ्च मणिभेदाः । पतङ्गमणिः सूर्यकान्तरत्नम् । पक्षे—चन्द्रका मयूरगरुतः । अन्तोऽग्रभागः । पतङ्गाः पक्षिणः । मणिः श्रेष्ठः । प्रवालो विद्रुमः

भञ्जिकापुञ्जेषु तद्दर्शनाश्चर्यनिश्चलजनेषु च विभाविते जडचेतनविपर्यासे, चलनक्रियानुमीयमाने आगारचित्रप्रतिमाचामरग्राहिवनिताजनताविवेके विवक्षुभूपसंकेतदृक्प्रसारमूकीभवत्सभाजने समाजने तत्रतत्र पर्यटति ताम्बूलकुसुमचन्दनपटवासादिमङ्गलद्रव्यदायिजने । राजाज्ञयाकारिता भर्तृदारिका शचीव निर्जरनारीकदम्बपरिवृता मुग्धमुग्धनेपथ्या

रङ्गधरांसा तुङ्गकुचश्रीः ।
आप च मूर्च्छा भूपतिपङ्क्तिम् ॥ ३४ ॥

ततस्तु तां चम्पकवल्ली नाम सखी प्राह—'भर्तृदारिके, पश्यैते राजपुत्रास्त्वयि संसक्तचेतसः । तदेतेष्वन्यतममङ्गीकुरु । कथयाम्येतेषां नामरूपक्रियागुणान् । तथाहि ।

एष किलानेककाण्डचक्रकीर्तिसंपच्छोभमानवाहिनीभरमज्जितविपक्षभूभृत्कदम्बो महासत्त्वप्रचाररमणीयो दर्शितानेकनिकटकान्तारागोज्जृम्भमाणोत्कलिकोऽयमगाधहृदयः सिन्धुराजो राजनन्दनो नाम । एष किल सर्वतोमुखानिरुद्धसंचारसार्थकितानिमिषचूडामणिविभवः निजविलास-

---

किसलयश्च । 'समौ चन्द्रकमेचकौ' इत्यमरः । 'पतंगः शलभे शालिप्रभेदे पक्षिसूर्ययोः' इति सुधा । दान्ता दन्तविकाराः । पक्षे–निगृहीतेन्द्रियाः । हिरण्यो हिरण्यकशिपुः । ताम्रम् । पक्षे–लताश्चाम्राश्च वृक्षभेदाः । 'दुर्वर्णं रजतं रूप्यम्' इत्यमरः । चन्द्रं सुवर्णम् । तारं रजतम् । वरा उत्तमाः । पक्षे—जामातरः पाण्डवाः । सभाया जनः । भाजनं पात्रं च । 'आकल्पवेषौ नेपथ्यं' इत्यमरः । **रङ्गधरेति** । सा पद्मावती रङ्गधरां प्राप मूर्च्छां च भूपतिपङ्क्तिं प्रापेत्यन्वयः । पङ्क्तिरिति वृत्तस्य नाम ॥ ३४ ॥ **तथाहीति** । काण्डा अश्वाः । चक्रं वृन्दम् । सत्त्वं व्यवसायः । कान्ताया रागोऽनुरागः । उत्कलिका उत्कण्ठा । पक्षे–काण्डं जलम् । कीर्तिः पङ्कः । विपक्षभूभृदगरुत्पर्वतः । सत्वा जन्तवः । कान्ताराणामगा वृक्षाः । उत्कलिकास्तरङ्गाः । 'द्रव्यासुव्यवसायेषु सत्त्वमस्त्री तु जन्तुषु' । सर्वतोमुखानि यस्य सः । अनिमिषा देवाः । पक्षे–सर्वतोमुखमम्भः । अनिमिषा

स्तोकिताप्सरोगणमहिममहितः उडुपतरणिवंशावलम्बिजनाकलितरसानुभावः राघवसदृशो मत्स्यराजः कन्दर्पकेतुर्नाम । एष किलानेकभूमिकाग्रहणविद्यानुरूपविविधशिक्षावलजागरूकपरिवारपरिवृतो नृत्यत्प्रमदाधिकरणस्थानभूषायमाणो लसदङ्गहारो रागशाली आनर्तदेशाधिपतिः कलकण्ठो नाम इति ।

शौर्यशालिनि तदा प्रियसख्या वर्णिते सदसि राजकदम्बे ।
स्तोत्रपाठरसिकादपरं नो मागधान्नृपसुता बहु मेने ॥ ३४ ॥

तदनु तेषां हर्षेण सहाकृष्य दृष्टिमन्तःपुरं गतायां भर्तृदारिकायां प्रतिकलं जृम्भमाणयौवनभरलोचनलोभनीयावस्थायां मदादौ परिजने कर्तव्यमूढे देवे आकाशभूपेऽपि चिन्ताव्याकुलचेतसि यथागतं गतवति मिलितराजवर्गे, अतिक्रान्ते कस्मिंश्चित्काले, कदाचित्परिवादिन्या विपञ्च्या अपरिवादिन्या चर्यया च वलक्षेण कान्तिकलापेन नवलक्षेण गुणवृन्देन युक्तः कोऽपि मुनिरागत्य राज्ञा पूजितः कंचन युवानमवर्णयत् । पश्चाज्ज्ञातं स मुनिर्नारद इति ।

---

मत्स्याः । अप्सरांसि जलयुक्तजलाशयाः । उडुपतरणिवंशाः प्लवनौकावेणवः । 'अस्ति मत्स्यस्तिमिर्नाम शतयोजनविस्तृतः । तिमिंगिलगिलोऽप्यस्ति तद्गिलोऽप्यस्ति राघव ॥' 'मत्स्यो मीनेऽथ पुंभूम्नि देशे' इति सुधा । भूमिका भूमिः । प्रमदः संतोषः । अधिकः रणः युद्धम् । अङ्गं देहः । हारः माला । पक्षे वेषः । प्रमदाधिकरणस्थानं वनिताधारस्थलम् । अङ्गहारोऽङ्गविक्षेपः । 'आनर्तो देशभेदे स्यान्नृत्यस्थाने' इति लिङ्गभट्टः । **शौर्यशालिनीति** । मागधः मागधदेशाधिप इति च । 'स्युर्मागधास्तु मगधा बन्दिनः स्तुतिपाठकाः' इत्यमरः । इति तत्त्वार्थः ॥ ३४ ॥ **कदाचिदिति** । 'परिवादोऽपवादे स्याद्वीणावादनवस्तुनि' इति । 'वलक्षो धवलोऽर्जुनः' इत्यमरः । लक्षं संख्याभेद इति परमार्थः । विरोधस्तु शब्दत एव ।

परं स राजपुत्रः क इति न जाने । तस्मिन्मुनौ यथाभिमतं याते भर्तृदारिका तु सुकृतसारसर्वस्वे तद्वर्णितराजकुमारेऽनुरक्तहृदयासीत् । अन्यदा वसन्तकाल उपचितमनोभवविकृतिः एकत्र स्थितिमसहमाना श्रवणमात्रगोचरे संकल्पनिर्मितदर्शनसुखदे तस्मिन्प्राणप्रिये कृतातिप्रणया विरहविनोदनाय सुवर्णमुखरीतीरमुपससर्प सर्पवेणी । तत्र कंचन मृगयासक्तं किरातराजमपश्यत् ।

शृणु सखे, अद्भुतमिदं वृत्तम् ।

स किरातराजः स एव राजपुत्रः, यस्तु नारदोक्तगुणकर्मरूपकलापः । सोऽपि च ताम् । अथैतन्मिथुनमनुरूपं यद्येतन्मेलयेद्विधाता तर्हि सफलस्तस्य मनोहररूपनिर्माणप्रयास इति मन्दमन्दं जल्पति सखीजने कालातिपातभिया प्रथमं चलितायां भर्तृदारिकायां सोऽपि किरातभूभृत्क्षणं तत्रैव लतामण्डपे स्थित्वा स्वाभिमतदेशमगमत् ।

ततः प्रभृति गजेन्द्रगण्डमण्डलगलन्मदासारमाधुरीसुहितमिलिन्दाङ्गनेव ननीरजातस्पृहा देवेन्द्रचित्तवृत्तिरिव नभोजनसंजातप्रीतिः कुकविवाग्विलास इव मृदुलां शय्यां नाङ्गीकरोति । दुष्टशूर्पश्रुतिरिवालिमञ्जुलशब्दान्न सहते । एवं स्थिते

मन्दे मारुतजातविक्रमभरे चक्रे च शोकाकुले
निर्वाणे सुमनोगणेऽभिविलसत्यद्धा पलाशिव्रजे ।
भिन्नेऽस्मिन्कुमुदे शिलीमुखचयै रामायणप्रक्रियां
सम्यग्दर्शयतीव मित्र शुशुभे तारापतिः केवलम् ॥ ३५ ॥

---

'कलापः संहतौ बर्हे काञ्च्यां भूषणतूणयोः' इत्यजयः । **ततः प्रभृतीति** । नीरे जाता स्पृहा न । पक्षे नीरजातं कमलम् । नभोजना देवाः । 'शय्येत्याहुः पदार्थानां घटना च परस्परम्' इति सरस्वतीकण्ठाभरणे । 'द्विपायिशूर्पश्रुतिकुम्भिसामजाः' इति हारावली । **मन्द इति** । तारापतिश्चन्द्रः । वसन्ते वायु-

ततश्च गगनगङ्गापुण्डरीकगलन्मरन्दधारासार इव हरिहयोद्यानविहरदैरावतगण्डमण्डलकषणच्युतहरिचन्दनतरुचूर्ण इव मित्रीभवन्नारदे तृणीकृतपारदे जगद्धवलीकरणविशारदे निन्दितक्षीरे त्रासितजारे शुभ्रीकृतनिखिलकान्तारे सचकितपरकीयाभिसारे संघितकुपितवनितासंसारे विरहिजनदूरे कृतसकलजीवलोकानन्दविस्तारे स्तोकितचकोरकक्षुधि चक्रवाककामकेलिरुधि वर्धितस्वाधीनपतिकाकामयुधि कुमुदभिदि घर्मनुदि उन्निद्रशम्बरशिरश्छिदि पथिकहृद्रोगे वर्धितरागे विकचाविकचभावानुमीयमानेन्दीवरपुण्डरीकविभागे पञ्चमस्वरविज्ञातपिकबकविवेके पारावारानन्दपरिपाके चुलुकिततमसि चालितयुवमनसि स्फूर्जच्चन्द्रमसि प्रवृद्धकोकिलागीते वज्रीभवन्मन्दवाते मुकुलितवारिजजाते संभोगशृङ्गारानुकूलसुरपारिजाते जाते विमलचन्द्रिकाप्रसारे उदितभूयिष्ठं पूरितसंयुक्तयुवजनताभीष्टं भूषितपुरुहूतकाष्ठं संध्यासमयतापसलोकविस्मृतस्फटिकमणिमालाभ्रमदपरिमललोभनिश्चलनीरावनिलीनचञ्चरीककुलालंकृतसुवर्णमुखरीकैरवं द्रवीभवन्निजशिलाजालदुर्लङ्घ्यकुल्यारचनाविघ्नितनवाभिसारिकामनोरथपरम्परारम्भम् अत्युच्चमाकन्दतरुशिखरगतकोकाङ्गनागलदश्रुबिन्दुसंदोहाकालवर्षागमभ्रमतोषितपोतचातकचक्रवालं चन्द्रमालोक्य

गोभिः परिष्कृतं भाति सश्रीकं चाब्जमण्डलम् ।

इति मदुक्तिमाकर्ण्य किंचिद्धसन्त्याः

नो चेत्तत्र कुतस्तिष्ठेत्सारङ्गः प्रणयाकुलः ॥ ३६ ॥

---

मैन्दः, जातिपुष्पाभाव इति कविसमयः । चन्द्रोदये कोकानामनुत्सवः कैरवस्य च विकास इति च । पलाशी वृक्षः । पक्षे मारुतजातो हनूमान् । सुमनसो देवाः । पलाशिनो राक्षसाः । कुमुदः कपिभेदः । 'भिन्नौ दारितसंगतौ' इति । 'कुमुदं कैरवे रक्तपद्मे स्त्री कुम्भिकौषधौ । गम्भार्यां पुंसि दिङ्नागे नागे शाखामृगान्तरे ॥' इति सुधा ॥ ३५ ॥ **गोभिः परिष्कृतमिति** । जलैः । पद्मकदम्बम् । भृङ्ग इति च । किरणैः । चन्द्रबिम्बम् । कुरङ्गः इति तत्त्वार्थः । 'स्यान्मण्डलं द्वादश-

इति वदन्त्याश्चम्पकवल्लया वचनमनाकर्ण्यैव विरहभारकृशाङ्गी मां प्रत्यवादीन्नृपसुता—'हला, पश्य।

चन्द्रोऽयं भ्रमसंगतेन विधिना विष्णोः पदे स्थापितः
पूर्णत्वं गमितः सुलक्षण इति ख्यात्यापि संयोजितः।
चक्राह्लादकरत्वमेति कमलानन्दं विधत्तेऽथ वा
स्नेहं वा किमसौ त्यजत्यपि मधोः पीतांशुको वा भवेत् ॥३७॥

इति। अथ क्षणमिव ध्यात्वा पार्श्वस्थिताया मदनकलिकायाः पाणिना पाणिमवलम्ब्य—'सखि मदनकलिके,

चन्द्रोऽयं पद्मिनीद्वेषी पुण्डरीकविरोधकृत्।
तस्य राकापतित्वं च राजत्वं चेति विस्मयः ॥ ३८ ॥

इति संलपन्त्येव लीलाकमलदीर्घिकातटमुपजगाम। तत्र निःश्रीकाणि कमलान्यालोक्य कोपतरलिताक्षी भ्रुकुटीमाबद्ध्य चन्द्रमाह—

'धात्रा तातधियार्चितं सुरगजाधीशेन हस्ते धृतं
क्षेत्रेषु प्रथितं प्रियव्रततनूजातेन संरक्षितम्।
शुभ्रांशो जगतां सुजीवनमये निन्दत्यथैतादृशं
हंहो पुष्करमाश्रयं निजमपि ज्ञातोऽसि जाल्मो भवान् ३९

---

राजके च देशे च बिम्बे च कदम्बके च' इति विश्वः ॥ ३६ ॥ 'हण्डे हञ्जे हलाह्वाने नीचां चेटीं सखीं प्रति' इत्यमरः। **चन्द्रोऽयमिति**। विष्णोः पदं नारायणस्थानम्। मधुर्दैत्यभेदः। अंशुकमम्बरमिति निन्दा। तत्त्वार्थस्तु आकाशम्। लक्षणं कलङ्कः। चैत्रः। अंशुकः किरण इति ॥ ३७ ॥ **चन्द्रोऽयमिति**। पद्मिनी वनिताभेदः। पुण्डरीकं श्वेतच्छत्रम्। इति चमत्कारः। तत्त्वार्थस्तु 'राका नवरजोनार्यां पूर्णचन्द्रतिथावपि' इति रभसः ॥ ३८ ॥ **धात्रेति**। कमलम्। करिहस्ताग्रम्। क्षेत्रभेदः। द्वीपभेदः। जलम्। आकाशम्। इति षट् पुष्करशब्दस्यार्थाः। 'जाल्मोऽसमीक्ष्यकारी स्यात्' इत्यमरः। 'पुष्करं पङ्कजे व्योम्नि पयःकरिकराग्रयोः। ओषधिद्वीपविहगरासोरगान्तरे (?) ॥' इति सुधा ॥ ३९ ॥

तदस्तु । किमस्माकं जगच्चिन्तया ।

हंहो कलानिधिरयं बुधनन्दनोऽयं
सर्वज्ञमौलिमणिरित्यवदं सदैव ।
दोषाकरोऽयमिति कस्य पुरो मयोक्तं
मत्पीडने नहि निदानमिहास्ति किंचित् ॥ ४० ॥

अथ वा किं प्रार्थनया ।

'जीववधूग्रहणकलाप्रवीणता ते त्रिलोकविदितैव ।
संपीड्य मामपि वधूजीवग्रहणप्रवीणतां याहि ॥ ४१ ॥' इति ।

अथ मदनकलिका 'अहो आश्चर्यम् । यदियमविज्ञातरतिसुखापि तस्य यूनो दर्शनादेवैवं ताम्यति, निन्दति च चन्द्रम्, भवतु । एवं भणामि तावत्' इत्यालोच्याह—'भर्तृदारिके, दिवासूर्यकृतस्वपरिग्रह-कुमुदिनीपीडनासहिष्णुतया निशि तत्परिग्रहकमलिनीं बाधते । त्वद्बा-धनेऽपि कारणमस्ति । तदपि शृणु । अर्धश्रवण एव तव मास्तु कोपः । तथा हि ।

तव कमलसदृशं नेत्रद्वयम्, अब्जसुन्दरं मुखम्, जलजहृद्यः कण्ठः, तामरसमनोज्ञो वर्णः, सारसानुकारि जघनम्, पुष्करबन्धुर्मध्यदेशः, पुण्डरीकसमानं गमनम्, पद्मोल्लासितं सौन्दर्यम् । किं बहुना । पद्मि-न्येव भवती खलु । अतो ब्रवीम्ययं न विषमवर्ती किं तु समवर्ती ।

---

**हंहो इति** । सर्वज्ञः शिवः । 'अथ दोषा च नक्तं च' इत्यव्ययम् । 'बुधः कवौ रौहिणेये' इति ॥ ४० ॥ **जीवेति** । जीववधूरिति वधूजीव इति व्यत्ययात्कश्चि-च्चमत्कारः । गुरुपत्नी स्त्रीजीवात्मेति तत्त्वार्थः । 'जीवः स्यात्त्रिदशाचार्ये द्रुमभेदे शरीरिणि' इति हैमः । नवोढायां स्नुषायां च जायायां युवतौ वधूः' इति लिङ्गभट्टः ॥ ४१ ॥ **कमलसदृशमिति** । कमलादयो नव पद्मार्थकाः । तत्त्वार्थस्तु—कुरङ्गः । चन्द्रः । शङ्खः । तामरसम् । 'स्मृतं तामरसं पद्मे ताम्रकाञ्चनयोरपि'

कोऽत्र दोषः सुधाकरस्य' इति । एवं कथयन्त्यां प्रियसख्यां शून्यहृदयं विहस्य तामेव लक्षीकृत्य प्राह भर्तृदारिका—'सखि मदनकलिके, पूज्यमानमभिहितं त्वया यत्समवर्ती चन्द्र इति । यतः ।

कृशानुभावं क्षीणोऽपि पूर्णोऽपि च न मुञ्चति ।
अतः सखि त्वया चन्द्र समवर्तीति गीयते ॥ ४२ ॥

सखि, इदमेकं विस्मृतं त्वया येन महानुपयोगस्तवेति सार्यते ।

मधुमाधवयोस्तुल्यः श्रीपुत्रः पुष्पसायकः ।
समवर्ती कुतः सोऽपि न भवेन्नीरजानने ॥ ४३ ॥

सखि, ज्ञातमिदानीं यच्चन्द्रादयः सर्वेऽप्यैकमत्येन चलन्ति तद्युक्तमेव यत्सर्वेऽपि शनिस्वभावा एव । तथा हि । छायानन्दनश्चन्द्रः, वायुर्मन्दः, वसन्तस्तु जातितः कालः, मदनश्च गुणतः कालः; कोकिलगणश्च वर्णतः कालः । अस्तु वैतत् । पदमिदमेकमेव विस्मयकरं चेतसः । यत्त्वममन्दगुणापि तेष्वेव मिलितेति तत्तुष्टोऽयं जनो धन्यश्चेति ।

तदनन्तरमसच्चम्पकवल्ली 'मा कोपय भर्तृदारिकाम् । दूनेयं दुरात्मना कुसुमधन्वना सुधाकरेण च । तदलमेतादृशवचनोपन्यासेन' इति मदनकलिकां निर्भर्त्स्यावदद्राजपुत्रीम्—'भर्तृदारिके, किमिति विषीदसि । एतेषामुपद्रवापनोदायास्ति कश्चित्सुलभ एवोपायः । तच्छृणु ।

---

इति विश्वः । सा प्रसिद्धा रसा भूमिः । विस्तृतत्वात् । आकाशम् । गजभेदः । लक्ष्मीः । वनिताभेदः । **कृशानुभावमिति** । समत्वं शब्दतः । तत्त्वार्थस्तु । अनुभावः प्रभावः । पक्षे कृशानुरग्निः । समं वर्तत इति समवर्तीति चमत्कारः । परेतराड् इति तत्त्वार्थः । मारकत्वादिति भावः ॥ ४२ ॥ **मधुमाधवयोरिति** । दैत्यनारायणयोरिति समत्वम् । मासभेदयोरिति तत्त्वार्थः ॥ ४३ ॥ **छायानन्दन इति** । छायानन्दनो मन्दः काल इति शनिपर्यायः । 'शनिर्मन्दः पङ्गुकालौ छायापुत्रोऽसितश्च सः' इत्यमराधिकपाठः । तत्त्वार्थस्तु । कान्त्या हर्षकः ।

कदाचिद्भनरमायाः प्रथमर्तुमहोत्सवसमये कस्मिंश्चिल्लतामण्डपे मिलिताः सर्वे सभासदः । तदाग्रत्वपूजार्हः क इति प्राप्तायां विचिकित्सायां कलावत्तया स्वयमिति चन्द्रः, मरुत्कुलं विश्वमान्यमिति वसन्तवायुः स्वात्मानं बहु मेने । तदा तु तयोर्विवादमाकर्ण्य भूपे स्वयमेव मदने एकः कलङ्की द्वितीयो मन्दः कृष्णोऽयं कलकण्ठः प्रथमं पूजनीय इति वदति सत्यमाज्ञापयति महाराजः—यत्पुरा राजसूययज्ञ एव निर्णयो जातः अग्रपूजार्हः कृष्ण इति इति वसन्तेन भणितम्, चञ्चरीकैरनुमोदितम्, अशोकेनाङ्गीकृतम्, रसालेन च श्लाघितम् । ततः प्रभृति चन्द्रादयः परस्परं साभ्यसूया इव तिष्ठन्तीति श्रुतं मया । तदद्य भेदोपायेनैव दैवाज्जातस्तेषामन्तः कलहो दृढीकरणीय इति । तच्छ्रुत्वा चमत्कृता स्मरशरदृढप्रहारवेपमानहृदयापि वसनाञ्चलेन नृसिंहपुरीमिव संवद्धनीरां प्रभातवेलामिवाकुलाकुलतारां लोचनयुगलीमुन्मृज्य 'साधु श्लेषवादधुरीणे, साधु अरीणकाव्यनिर्माणकलाचतुरे, साधु भणितम्' इति मुहुर्मुहुरभिनन्दनीयामभिनन्द्य 'हला, त्वमेव वसन्तादीन्मद्वचनेनैवं कथय' इत्याह । तथा हि ।

चन्द्रः कान्तोऽपि रोहिण्या वृषभो न न गौर्भवेत् ।
वसन्त एष सुरभिरथ किं तत्र ते रतिः ॥ ४४ ॥

---

अपद्रुः । समयः । यमः । नीलः । अमन्दगुणाः । शनिगुणा नेति विरोधः । अनल्पगुणेति परिहारः । **कदाचिद्भनरमाया इति** । ऋतुः स्त्रीपुष्पमिति च । कालभेद इति तत्त्वार्थः । 'मरुतौ पवनामरौ' इत्यमरः । 'व्यासार्जुनाग्निहरिकोकिलकाकस्थूरतामिस्रपक्षकलिनीलगुणेषु कृष्णः' इति भास्करः । नीरा नदीभेदः । चन्द्रः कान्तोऽपीति । रोहिणी सुरभिश्च गौरिति चमत्कारः । तत्त्वार्थस्तु चन्द्रभार्या । वसन्तः । 'अर्जुन्यघ्न्या रोहिणी स्यादुत्तमा गोषु नैचिकी' इत्य-

मातुलहन्तुस्तनयो मदनस्त्वं तस्य मातुलश्चन्द्र।
मा विश्वस हेतुगुणाः कार्ये किं नहि भवन्ति तारेश ॥ ४५ ॥
कुह्वाह्वानचणोऽयं पिकनिकरोऽहिं च पोषयति वायुः।
तद्द्वितयाह्वययुक्तस्त्वं सोम किमित्ययेतयोर्मिलसि ॥ ४६ ॥
सर्वलोकजननीति विश्रुतां मां दहत्यविरतं खरैः करैः।
आत्मभूरसि निवारयाशु तं मीनकेतन कुमुद्वतीसखम् ॥ ४७ ॥
अपसर चन्द्राद्दूरं कथयामि हितं समीर गिलति त्वाम्।
एष भुजङ्गश्चन्द्रो मिथ्या चेत्पृच्छ भोस्ताराम् ॥ ४८ ॥'

इत्युक्त्वा च 'हञ्जे शृङ्गारमञ्जरि, इत एहि' इति मामाहूय मत्स्कन्धाहितैकबाहुरितस्ततो हेमलतेव चलन्ती प्राह—

'दुरुच्छेदः प्रेमा क्वचिदपि पदार्थेषु रचितः
स वो यत्राभूमिः प्रियसखि विधातर्यसुमुखे।
शरारुः कामोऽयं शकलयति मर्माणि तिलशो
न यान्त्येते प्राणाः कथमपि दुराशानिगडिताः ॥ ४९ ॥

अयि शृङ्गारमञ्जरि, एते मदनादयो न गुणसाध्याः। किं तु दण्ड्या एव।' मदनं लक्ष्मीकृत्य।

---

मरः ॥ ४४ ॥ **मातुलेति**। मातुलहन्ता कृष्णः। तस्य मदनस्य। कार्ये कारणगुणाः संभवन्तीति शास्त्रम् ॥ ४५ ॥ **कुह्वाह्वानेति**। 'सा नष्टेन्दुकला कुहूः' इत्यमरः। तस्या आह्वाने चणः समर्थ इति चमत्कारः। तत्त्वार्थस्तु कुहूरिति पिकध्वनेर्नाम। अत एव 'कलकण्ठः कुहूमुखः' इत्यजयः। 'भुजंगोऽहिः समाख्यातः सिंहिकासूनुरप्यहिः' इति। कुहूः अहिरिति। तयोर्द्वितयम्। तयोः पिकवाय्वोरिति सप्तमी ॥ ४६ ॥ **सर्वेति**। सर्वलोकानां जननी माता। मामिन्दिराम्। आत्मभूर्ब्रह्मा इति चमत्कारः। तत्त्वार्थस्तु सर्वलोकजनानां या नीतिः। पश्चाद्वंत्यभिधानम्। मदनः लक्ष्मीं पीडयतीत्यनेन कामस्य तत्पुत्रत्वात्कोपोत्पत्तिर्भवतीति

'रे मनोज कुलदीपकरत्वं प्रापितोऽसि नचिरेण विधात्रा ।
यत्पितुस्तव जनित्रितयेष्टामाश्रितोऽसि वनितावधचेष्टाम् ॥ ५० ॥'

इति । अथाहमचिन्तयम्—'अये, मदनहतकोऽयमतितरां पीडयति भर्तृदारिकाम् । तद्बलसर्वस्वमयं सुधांशुः । तदनेनोपायेन भर्तृदारिकां कोपयित्वा शिक्षणीयः यथायं स्वां प्रकृतिं भजिष्यति' इति निश्चित्यावदम्—'भर्तृदारिके, अहं कथयामि चन्द्रवृत्तान्तम् । तथाहि—

एष किल द्विजराजः परिकलितमध्वागमोऽतनुहुताशेन सदरं चक्रं संताप्यानेकसुमनःकदम्बसुकृतोपनतस्य तपस्यानन्तरभाविप्रसादस्य भगवतो माधवस्य प्रेरणया कलितपरमामोदेन मन्दानुकूलेन वायुनानुगृहीतः सुवंश उदयन्नेव रक्ताम्बरो बुधनन्दनो मृगकृत्तिकापरिग्रहो योगिजनोल्लासको वियोगदूनं जनमेनं स्वकरेण संताप्योपदिशति परं पुरुषं भजेति । तदत्र किं चित्तविक्षेपेण' इति । अथ सा वेलातीतकोपा 'आः दुरात्मा परपुरुषं भजेति मामुपदिशति किल । तत्फलं सद्य एवानुभवतु चन्द्रहतकः, तत्संबन्धान्मदनादयोऽपि' इत्युक्त्वा विरहाकुलाभ्यां लोचनाभ्यां

---

भावः ॥ ४७ ॥ **रे मनोजेति** । नचिरेण शीघ्रम् । पितुः कृष्णस्य । कृष्णभार्गवराघवरूपेणेति । जनित्रयं जन्मत्रयम् । इष्टामभिमताम् । पूतनाताडकारेणुकाः कृष्णेन तत्तदवतारे संहृता इति पुराणम् । पितृचरणानुचरणादेव कुलदीपकरत्वं युक्तमिति भावः ॥ ५० ॥ **अथाहमचिन्तयमिति** । प्रकृतिं स्वभावम् । एष चन्द्रः । ब्राह्मणश्रेष्ठः ज्ञातमध्वशास्त्रः अनल्पाग्निना सशङ्खं सुदर्शनं तापयित्वा देवगणचीर्णपुण्येन मिलितस्य कायक्लेशात्मकतपश्चर्यानन्तरजायमानानुग्रहस्याज्ञया संबद्धात्यन्तानन्देन मूढजनोद्धारप्रवृत्तेन वाय्ववतारभूतश्रीमध्वाचार्यभगवच्चरणेन स्वीकृतः । शोभनवेणुधारी बाल्य एव काषायवसनधारकः विद्वद्धर्षकः हरिणाजिनयुक्तः ध्यानिलोकानन्दकः उपायाभावेन दुःखितं प्रसिद्धं लोकं स्वहस्तेन चक्राद्यङ्कितं कृत्वा उत्तमपुरुषं नारायणमाराधयेत्युपदिशतीति चमत्कारः । तत्त्वार्थस्तु द्विजाधिपतिः । ज्ञातचैत्रागतिः । मदनाग्निना सभयं

गलताश्रुजलेन क्षणादञ्जलिमापूर्य कंदर्पादीन्कटाक्षीकृत्य वार्यमाणापि सखीकदम्बेनैवमाह। तथा हि—

यदि जन्मप्रभृति भगवतो नारदोक्तगुणकर्मरूपात्सकृल्लतामण्डपे लज्जामन्थरतारमालोकितात्तच्छबरयूनः अन्यस्मिन्पुरुषे यद्यहमननुरक्ता तत्सफलीभवतु मे सरस्वती।

त्वं रे याह्यतनुत्वमाशुगचयः पञ्चत्वमेतु क्षयं
सामन्तः शिशिरांशुकोऽप्यसुमनोभावं च पुष्पाकरः।
मान्द्यं यातु मरुत्सुहृत्तव रतिं गृह्णातु सर्वं जग-
न्मच्छापान्मदनाहमस्मि निरतैकस्मिन्नसाधारणी॥ ५१॥'

इत्यभिधाय किंचिदालोच्य सर्वमपि सखीगणमभणत्—'अयि सख्यः, यद्येनामापदं निस्तीर्य जीवामि तर्हि वरमेव। अन्यथा यद्यवतरति दैवाद्युष्मल्लोचनपथं स शबरयुवा तदैवं वक्तव्यः।

यद्वैशसं मयाप्तं नहि तत्त्वद्रागहेतुकं किं तु।
गुरुजनलज्जामूलकमिति जानन्रमण मुञ्च मयि करुणाम्॥ ५२॥'

---

कोकं तापयित्वा पुष्पगणपुण्यात्प्राप्तस्य फाल्गुनमासानन्तरं प्राप्तस्य प्रेरणया प्राप्तगन्धेन मन्देनाप्रतिकूलेन च गन्धवहेन अनुगृहीतः शोभनकुलः उदयकाले शोणाकाशः रौहिणेयजनकः नक्षत्राधिपः। संयुक्तहर्षजनकः। विरहदुःखितं लोकं त्वां स्वकिरणैस्तापयित्वा किरातचक्रवर्तिन आशां विहाय अन्यं यं कंचन युवानं भजेत्युपदिशतीति। त्वं रे याहीति। अतनुत्वं देहरहितत्वम्। 'स्यात्पञ्चता कालधर्मः' इत्यमरः। क्षयं नाशम्। असुमनोभावमपण्डितत्वम्। मान्द्यं मूढत्वम्। रतिं भार्याम्। इति शापप्रकारः। दैवादियं वाक् यथास्थितप्रकारेण परिणता। तथाहीति। अनङ्गत्वम्। पञ्चसंख्याविशिष्टत्वम्। कलाहानिम्। मालतीपुष्पाभावम्। अतीव्रगमनत्वम्। आसक्तिमिति। सामन्तो मन्त्री। साधारणी वेश्या। एकत्र निरता सीध्वा। 'क्षयो रोगान्तरे वेश्मकल्पान्तापचयेषु च' इति सुधा॥ ५१॥ यद्वैशसमिति। वैशसं हानिम्। त्वं मदर्थं दुःखी मा भवेति

इति कथयन्त्येव बाष्पाकुललोचने वयस्याकदम्बे विहाय प्रमदवनं प्रन-दाजनं च मय्यप्यप्रसादा प्रासादमारुह्य विहाय पर्यङ्कं पर्यङ्कस्थापितवा-मकूर्परा करकमलाञ्चितवदना दक्षिणदृक्कोणेन किमपि किमपि पश्यन्ती कनिष्ठिकानखशिखया बाष्पसलिलं दिशि दिशि किरन्ती क्षणं क्षणं परिचर्यापरायणेऽपि जने शून्यतरया चित्तवृत्त्या बाहुयुगलवेष्टितजानुद्व-यस्थापितमौलिः क्षणं दीनदीनां दृशं पार्श्वस्थितसखीवर्गे धीरं धीरं संचा-रयन्ती तस्थौ । अत्रान्तरे कथं कथमपि ज्ञातवृत्तान्ता देवी धरा कन्य-काप्रासादं स्खलच्चरणविन्यासमागत्य किमिदं किमिदमिति पप्रच्छ सखी-वर्गम् । तदनु

> वैद्यैर्ज्वरोऽयमिति दृष्टिरिति स धात्र्या
> 　पीडा शनेरिति वचो गणकैः प्रयुक्तम् ।
> अत्रान्तरे सहचरीगणमाप हासः
> 　कन्यां त्रपा नृपसतीमथ संशयोऽपि ॥ ५३ ॥

अथ देवी धरा विचिकित्सातरङ्गितान्तरङ्गा मामपृच्छत्—'हञ्जे, किमेतत् । सत्यं कथय' इति । तत्र च व्यतिकरे सानुनयं पृच्छन्त्यां देव्यां कृतावहित्थास्वालीषु 'इदानीं किमेषा कथयति पापा' इति रहस्य-भङ्गभिया दूनायां भर्तृदारिकायां सजिह्वायन्त्रणम् 'मा भण । शापिता-स्यसत्प्राणैः' इति सूचयन्त्यां मदनकलिकायाम् 'कथय कथयाविलम्बि-तम्' इत्युत्सर्पितपूर्वकाये जल्पति जरद्धात्रीवर्गेऽहमेवमवदम्—'देवि, ह्यस्तने अस्माभिः सहेयं भर्तृदारिका पुष्पावचयाय गता खलु वनवाटि-काम् । तत्र चित्तजातकुतूहलेनोच्चरलिता कस्मिंश्चित्किरातकुलभूषणे

---

भावः ॥ ५२ ॥ पर्यङ्कमेकम् । 'तु हि च स्म ह वै पादपूरणे' इत्यव्ययवर्गामरः । पूर्वेद्युः ह्यो गते । अकृतार्था अकृतप्रयोजना ॥ ५३ ॥ स्मितरुचिं स्मितशो-

भूभृति संवद्धक्रीडानुरागासीत् । अकालोऽयमित्यकृतार्थैव यावद्भवन-मायाति तावदस्या इयं दशा । तदिदानीम्

देहो मध्यसमच्छविः सितरुचिं धत्तेऽथ नासामणिः
कैश्यस्यानुकरोत्यमेयचरितानल्पान्विधत्ते गुणान् ।
निश्वासश्च विजृम्भते प्रतिकलं बाष्पो यथा यौवनं
संतापस्तुलयत्यपारविभवं लावण्यवारांनिधिम् ॥ ५४ ॥

देवि, प्रथमं तावदस्याः करयुगले तापमाकलय ।

यस्मिंस्तामरसभ्रमेण मिलितैर्भृङ्गैः पतङ्गायितं
संस्पृष्टैर्मणिबन्धकीरनिकरैः संपातिपक्ष्यायितम् ।
केलीपुत्रिकयापि दिव्यसमयश्रीरामकान्तायितं
लेपार्थं कलितैश्च चन्दनरसैरामोदिधूपायितम् ॥ ५५ ॥

किं चैनम् स्मारं ज्वरं कलय लोकविलक्षणम् । योऽयं पूर्णचन्द्रोद-याभियोगाद्वर्धते । जैवातृकदर्शनादपि जृम्भते । सेयं भर्तृदारिका स्तोकेन वायुनापि दूनेव भाति । कस्यचिद्दृग्दोषेणापि भवितव्यम् । यश्चासन्मन्त्राविषयः । अपि च । किमेतदिति विविच्य प्रष्टव्यम् । यस्यामवस्थायां वर्तते भर्तृदारिका सा किं देव्या न ज्ञायते । देव्येत-देव जानामि । इतःपरं देवी प्रमाणम्' इति ।

ततश्च सा सूक्ष्मज्ञा महादेवी क्षणमिव ध्यात्वा दीर्घमुष्णं च निश्वस्य किमप्यनुक्त्वा प्रययौ । महाराजोऽपि देवीद्वाराकलितवृत्तान्तैकदेशो माम् 'वासु, इत एहि शृङ्गारमञ्जरि' इत्याहूयाज्ञापयामास—'गच्छ तपोवनं यत्र भगवानुशना । शीघ्रमेव मन्त्रपूतं जलमाहर । येन ताप-

---

भाम् ॥ ५४ ॥ **यस्मिन्निति** । संपातिनामकः कश्चन पक्षी सूर्यकिरणदग्धपक्षो जात इति श्रीरामायणम् । दिव्यं शपथः । रावणहननानन्तरं सीता शुद्ध्यर्थमग्निं प्रविवेशेति तत्रैव ॥ ५५ ॥ **किं चेति** । स्मेति भिन्नं पदम् । अरमत्यन्तमित्यर्थः । पूर्णचन्द्रोदय औषधभेदः । जैवातृको वायुः । पिशाचबाधेति लोकोक्तिः । मन्त्रः

शान्तिर्भवेद्वत्सायाः' इति । तदाहमन्तर्नियमितस्मिता 'किं भवति मन्त्र-जलेन विद्यावलेन वा । मुधैव मामायासयति देवो भर्तृदारिकामिव मदनः । देवोऽपि भ्रान्त इव लक्ष्यते' इति स्वगतमालोच्य प्रकाशम्, 'देवस्याज्ञा प्रमाणम्' इत्युक्त्वा अनुष्ठितराजादेशा प्रतिनिवृत्तास्मि । वयस्य, उक्तं वक्तव्यम् । यदीषदपि परिचयः सरलानां नान्तरं सहते । सखे मरालक, चित्रमेतत् ।

स्वान्तं हिनस्ति मदनो मानभङ्गाय कल्पते ।
सोऽपि सौख्योन्नतेर्हेतू रागस्य विषमा गतिः ॥ ५६ ॥

अस्त्वेतत् । स सुकृती केति न जाने । यस्तु तादृग्जगज्जयजङ्गमदनवैजयन्त्याः शृङ्गारसारसर्वस्वमञ्जूषाया हृदयाकर्षीति अस्त्वेतदप्यनुमन्यस्व यथाभिगतगमनाय । वेला भूयसी जाता । किंत्वेतदपि ज्ञातुमिच्छामि को भवानिति विस्तरतः । तत्कथय' इत्याभाष्य जोषमासीत् ।

मरालकोऽपि 'सखि, शृणु मदीयवृत्तान्तम्' इति यावद्वक्तुमिच्छति तावदेव श्रीनिवासोऽपि

नो नीता रतिमन्दिरं मणिमयं नो मञ्चमारोपिता
नो दष्टोऽधरपल्लवः कुचतटी स्पृष्टा न वा पाणिना ।
न क्रोडेऽपि कृता न वा मृदुगिरा संभाषिता केवलं
दृष्टा चूतवने करोति विवशं चेतः कथं कुर्महे ॥ ५७ ॥

भूयःकातरतामवाप हृदयं वस्त्वन्तरं नेक्षते
दृष्टिः कम्पमुपैति गात्रमयते धैर्यं निरालम्बताम् ।

---

दृष्टिपरिहाररूपः चिकित्साभेदः । इति गूहनप्रकारः । तत्त्वार्थस्तु—स्मारं स्मरसंबन्धिनम् । जैवातृकश्चन्द्रः । स्तोकेन वायुना मन्दमारुतेन । कस्य यूनः । मन्त्र आलोचने । 'वेदभेदे गुप्तवादे मन्त्रः' इत्यमरः । प्रमाणं प्रमात्रीकरणम् । 'प्रमाणं हेतुमर्यादाशास्त्रेयत्ताप्रमातृषु' इत्यमरः । 'बाला स्याद्वासूः' इत्यमरः । स्वान्तेति । 'मानश्चित्तसमुन्नतिः' इत्यमरः । इति चमत्कारः । कोपभेद इति

रागाग्निर्मलयानिलैरुपचितः सैनां दशां प्रापय-
त्यत्रानङ्गकलम्बको हृदि गतः साक्षी न चान्यो जनः ॥५८॥

इति वदन्नेव यदृच्छया तत्स्थानमगमद्यत्र शृङ्गारमञ्जरी मरालकश्च । आगत्य च तां दृष्ट्वा दृष्टपूर्वतनसंजातप्रत्यभिज्ञः तयापि सरभसमुत्थाय सम्यङ्मौलिदेशप्रसारितचेलाञ्चलया 'कथमत्र देवोऽपि' इति सस्मेर-मुखमञ्जलिं बद्ध्वा

यः शूरान्वयसंभवः करगतं चक्रं च यस्य प्रजा
लोके नाभिभवत्वमेति स च मे श्रीवत्सलक्ष्मा पतिः ।
कान्तस्तत्रभवान्भवत्विति यया तप्तं तपोभिः पुरा
सा वै मङ्गलदेवता भवतु ते कामाय सोमानना ॥ ५९ ॥

इत्याशिषा सविनयमभिनन्दितदर्शनश्चिन्तितवान्—'अहो, अपूर्वेयमा-शिषां परिपाटी । यदस्मिंल्लोके तत्रभवानिति शब्दश्रवणेन किमप्यान-न्दमेदुरितमिव चेतः । प्रायः प्रकृतोपयुक्त एवालापोऽयं भवेत् । अथ वा भ्रान्तेरेष विलासः । यदत्र यदृच्छया प्रयुक्तेषु शब्देषु स्वानुकूलार्थ-ग्रहणम् । किमाश्चर्यमेतत् जगदेव तन्मयं पश्यतः । अथ वा तर्का-गोचरा खलु नियतेर्भङ्गी ।

अब्दानामयुते गते सुतजनीरक्षा च तेन कृतो-
रस्त्वेतद्धनुरैशमुग्रमभवद्भग्नं कथं तेन हि ।
अस्त्वेतच्च दशाननं स हतवानाजौ तदप्यस्तु वा
तद्वार्तां त्रपते वदन्नहि कथं वल्मीकजन्मा कविः ॥ ६० ॥

किं च ।

भिन्नं मेलयति प्रमादगलितं श्रथ्नाति नीतं पुनः
प्रत्यावर्तयति क्रमेण शिथिलं नव्यं तनोति क्षणात् ।

---

तत्त्वार्थः । विषमातिनिम्नोन्नता । यः शूरान्वयेति । शूरो यादवभेदः । प्रजा पुत्रः । नाभिभवत्वं चतुर्मुखत्वम् । तत्रभवान्पूज्यः । श्रीवत्सं लक्ष्म चिह्नं यस्य

दूरस्थं निकटीकरोत्यसुघटं चानीय पाणौ ददा-
त्याच्छन्नं प्रकटीकरोति पुरतो दैवं प्रसन्नं यदि ॥ ६१ ॥

इति विचिन्त्य च । 'अपि सखि, दिष्ट्या दृष्टासि किं कुशलं ससखीकदम्बाया युष्मद्भर्तृदारिकायाः' इत्यानन्दबाष्पस्थाने विरहसंतापजनिताश्रूणि कल्पयन्हरितालपीतांशुकाञ्चलेन प्रमृज्य शोणारविन्दद्रोहदक्षं नेत्रयुगुलम्, सस्पृहं तामभाषत । सापि लज्जामन्थरतारं विलोक्य 'कुशलमव्याहतं भर्तृदारिकायाः । यस्या भवादृशश्चित्तोन्मथनहेतुः । किं चायं विदितवेद्यः कुतः देवस्य प्रियसहचरो मरालकः' इत्यभिधाय कृततत्कालोचितालापेन तेन चाभिमतप्रयाणा गृहीतपारितोषिका 'अयमयं देव, प्रयाणप्रणामाञ्जलिः' इति परिवृत्य परिवृत्य पश्यन्ती शनैर्जगाम । श्रीनिवासोऽपि मरालकवचनदृढीकृतधृतिः फणीन्द्राचलमागत्य बकुलमाला नारायणपुरं प्रेषयितुमिच्छन् ।

मधुरवचनरीतिं मञ्जुसत्संविधानां
कथमपि निजकार्यस्यानुकूलां विधाय ।
कविरिव विधिनारीं वेङ्कटेशः प्रसाद्य
प्रभुरपि बकुलां तां श्रीनिवासो ननन्द ॥ ६२ ॥

इति श्रीवेङ्कटेशकविविरचिते श्रीनिवासविलासे पूर्वभागे तृतीय उच्छ्वासः ।

---

स नारायणः । कान्तो मनोहरः । पतिर्भवतु । सा मङ्गलदेवतेति । पुरा विवाहात्प्राक् । इत्याशीःप्रकारः । प्रकृतोपयुक्तालापपक्षे तु प्रतापी । चक्रं राष्ट्रम् । प्रजा लोकः । अभिभवः पराभवः । नेति समासः । श्रीवत्सलश्चासौ क्ष्मापतिश्च । भवान्पुरोवर्ती । कान्तः पतिः । पुरा पूर्वजन्मनि । यत्र यस्मिन्कस्मिंश्चित्तपोवने । शुभाधिदेवते पद्मावत्या उपचारः । 'प्रजा संतानलोकयोः' इति । भङ्गी रीतिः । मधुरेति । मधुरं स्वादु । इति श्रीधरणीधरविरचितायां श्रीनिवासविलासचम्पूटीकायां पूर्वभागे तृतीय उच्छ्वासः ।

चतुर्थ उच्छ्वासः ।

अथ परेद्युः श्रीनिवासाज्ञया नारायणपुरं गच्छन्ती बकुलमाला मध्येमार्गमनर्गलप्रसरद्यशसं भगवन्तं ब्रह्मरातं निरीक्ष्य प्रणम्य च यथावृत्तं निवेदयामास—'महर्षे, कूपोद्धृत, विष्णुरात, विदितमेव भवता भवतापहारकः श्रीनिवासो भुजङ्गाचले निवसति' इति । स च कदाचिन्मृगयापरावृत्तो मामभणत्—'अयि बकुले, अद्य मया विपिनभुवि भ्रमता पद्मसरसो नातिदूरे कापि पिकालापा दृष्टा स्पृष्टा च मनसा । या खलु हीनमहीनमपि कलयति वेण्या । तनुमतनुं चोल्लासयति दृष्ट्या । अगं नागं च लज्जयति कुचाभ्याम् । गजमगजं च ह्रेपयति गमनेन । रतिमरतिं च तिरयति रूपेण । किं बहुना ।

> वक्त्रं पुष्करहारि शम्बरलसन्नेत्रं वियोगो विषं
> बिम्बोष्ठोऽमृतसुन्दरः शरशतं ते ते कटाक्षाङ्कुराः ।
> क्षीरं वाग्भुवनोत्तरं वपुरये यस्याः कुचः सद्रसः
> प्रेमा जीवनमेव तद्विधुमुखी सा साधुनीत्युज्ज्वला ॥ १ ॥

स खलु दर्शनात्प्रभृति चन्द्ररेखेव सागरस्य कामपि विकृतिमापादितवती चेतसः । तदत्रभवती भवती नियतिश्च शरणम्' इति । अहं तु तदुक्तवती यदुचितमार्यभावस्य । तथा हि—'देव, परिहरेमां मनीषाम् । यतस्त्वादृशानां पार्थिवानां नोचितः पराभवप्रकारो मन्मथेन । तोषहेतु-

---

**अथेति** । ब्रह्मरातः शुकः । विष्णुरातः परीक्षित् । पिकालापा वनिता । **या खल्विति** । अहीनां सर्पाणामिनः श्रेष्ठः शेषः । 'इनः सूर्ये प्रभौ' इत्यमरः । शरीरं मन्मथं च । पर्वतं गजं च । अगजं पर्वतोत्पन्नं गजम् । मदनभार्यामनासक्तिं च । इति तत्त्वार्थः । चमत्कारस्तु शब्दत एव । **वक्त्रमिति** । पुष्करादि नवकं जलार्थकम् । धुनी नदीति चमत्कारः । तत्त्वार्थस्तु साधूनां नीत्या उज्ज्वला । रसः शृङ्गारः । अत्रभवती पूज्या । **अहं त्विति** । पार्थिवादयस्त्रयः संवत्सर-

धरणी न तरुणी । महत्त्वं दर्पेण न कंदर्पेण । अङ्गीकुरु सैन्यं न दैन्यम् । संपादनीयाः कोशा न क्लेशाः । के वा चिरंतनाः स्त्रीमूलक-व्यसनेन न लघुतां नीताः । दैत्यारिरपि राक्षसविधिमङ्गीचकार भगवा-न्गोविन्दः । विना चन्द्रं को वा बुधनन्दनो जातः । मधुपाः कुसुमेषु सक्ता भवन्ति । मदनासक्तास्तमो विशन्तीति त्वयाप्युक्तमेव किं तन्मृषा । माररहितो निःश्रीक एव । अपि चेदमपि शृणु या भवतोक्ता सा प्रायेण वियद्भूपालसुता भवेत् । जानामि तां यस्या मधुपकुलसुख-प्रश्नचतुरा कुन्तलाली । भुजङ्गस्पृहणीया वेणी दोषाकरानुकारि मुखम् । परपुष्टसब्रह्मचारी ध्वनिः । पल्लवैकासिकायोग्योऽधरः । द्विजिह्वसहचारिणी रोमलता । मातङ्गानुकारि गमनम् । सत्येवं शुद्धो भवात् कथं तस्यां सक्तः । अस्तु वा तस्यां प्रणयः । विरुद्धचर्ययोः कथं परिणामरमणी-यता । तदपि शृणु संक्षेपतः । सा दिशो रञ्जयति, त्वं पुनररञ्जयन् । सा दृशा रङ्कुकुलद्वेषिणी, त्वमरं कुकुलद्वेषी । सा पुनरलंकारातिसुन्दरी, त्वं तु लङ्कारातिसुन्दरः इति । अतःपरं यथारुचि समाचर' इति । सोऽपि श्रुतमद्वचनः ईषद्धसन् 'देवि, शब्दसामर्थ्याद्गुणान्दोषीकर्तुं दोषानपि गुणीकर्तुं समर्थासि । अलोकसामान्या तव शक्तिः । किम-सुघटं श्लेष्मभाषणरसिकानाम् । प्रसीदतु वत्से, मयि निर्व्याजप्रेममांसलं

---

भेदः । राक्षसविधिर्विवाहविधिभेदः । कुसुमेषुर्मदनः । मधुपा इति निन्दा । कुसुमेष्विति भिन्नं पदम् । भृङ्गा इति तत्त्वार्थः । मदने आसक्ता इति निन्दा । मय्यनासक्ता इति तत्त्वार्थः । मारस्य हित इति निन्दा । मा रमेति तत्त्वार्थः । **यस्या इति** । मधुपादि सप्तकं मद्यपाय्यायर्थकमिति निन्दा । परपुष्टः परान्ना-भिवृद्धशरीरः । सुखप्रश्नचतुरेत्यादिशब्दाः समानार्थकाः । 'एकब्रह्मव्रताचारा मिथः सब्रह्मचारिणः' इत्यमरः । एकासिका एकासनस्थितिः । तत्त्वार्थंस्तु परपुष्टः पिकः । 'द्विजिह्वः पन्नगे पुंसि खले स्याद्वाच्यलिङ्गकः' इति त्रिकाण्ड-

नवनीतकोमलं ते चेतः । कश्चित्पुरुषः स्वशत्रुमपि विवाहशोभया योजयन्महतीं कीर्तिं प्राप्नोति । अतो मां कृतार्थं विधाय परां समाख्यामवाप्नुहि' इति साञ्जलिबन्धमभणत् । 'महर्षे, किं करोमि किंकरी । तदाज्ञा प्रमाणम्' इत्यवतीर्य पवनाशनाचलात्प्राप्य कपिलेश्वरम् ।

गुणवद्गुणोऽप्यहीनो मार्गणवन्मार्गणोऽपि लक्ष्मीवान् ।
धर्मो धर्मवदचलो यस्य स पायात्पुरारातिः ॥ २ ॥

इत्यार्ययोल्लसन्महाश्लेषया गौर्येवापरया नन्दयन्ती तमुमानायकमिह प्राप्तासि । बादरायणे, इदमपरमभिहितं देवेन—'बकुले, यद्यत्र कन्यासंबन्धिनामनुयोगः प्रसरेत्तदा किं कथयसि । अद्याप्यकृतविवाह इति कालातिक्रान्तिदोषसूचनम् । जातविवाहोऽयमिति सपत्नीस्थितिज्ञापनम् । तस्यामलब्धसंतान इत्यनतिपुंस्त्वव्यञ्जनम् । द्वितीयो विवाह इत्यमङ्गस्योद्बोधनम् । भार्यास्य विप्रकृष्टा वर्तत इति गृहच्छिद्रावेदनलाघवम् । सा दुश्चरित्रेत्यलीकवादमहापातकम् । नैकया तुष्यतीत्यव्यवस्थाद्योतनम् । रूपोन्मादित इति वनितापूर्वकानुरागाभावकथनम् । त्वया प्रलोभितोऽयमिति कुमारीजनविरुद्धशङ्काबीजोद्भावनम् । अभिनवया इति पापीयसा निष्कारणपरोपतापदक्षेण नारदेन भिद्यते रहस्यं पुराणपुरुष इति । अथ चतुरासि वक्तुम् । किमपि वा वद । कथमपि वा कुरु ।

---

शेषः । अरमलं जयन् । 'रङ्कुशम्बररोहिषाः' इत्यमरः । 'अलंकारो विभूषणम्' इत्यमरः । लङ्कारातौ रामः इति तत्त्वार्थः । विरुद्धचर्या तु शब्दत एव सिद्धा । **सोऽपीति** । मांसलं पृथुलम् । विवाह उपक्रमः । इति तत्त्वार्थः । शत्रुपक्षे तु विगतवाहनशोभयेति । विः अभाववाची । **गुणवदिति** । गुणो मौर्वी । अहीनः शेषः । मार्गणो बाणः । याचकवत् । धर्मो धनुः । अचलो मेरुः । त्रिपुरहतिकाले शेषो मौर्वी नारायणो बाणः मेरुर्धनुः शिवस्येति पुराणम् । 'गुणो मौर्व्यामप्रधाने रूपादौ सूद इन्द्रिये । त्यागे शौर्यादिके सत्त्वसंख्यायावृत्तिरज्जुषु ॥'

अप्रभुरसि युक्तायुक्तपरिज्ञाने । इत्येवं मय्येवार्पितभरे देवे मयाद्य किं कर्तुं शक्यमित्येवमुक्त्वा विरराम । संवृतवचनायां तस्यां शुकोऽपि स्मारितश्रीनिवासः पुलकाङ्किततनुः शनैस्तां बभाषे—'देवि बकुले, कुशलासि वक्तुम् । यदत्यक्तार्यभावया देवस्य चित्ताराधनं कृतम् । अनुसरणीयाः खलु निरर्गलप्रचाराः प्रभवः ।

अस्त्वेतत् । तावुभावपि दृष्टपूर्वौ । तयोर्योग्य एव संयोगः । यतः सा श्यामा स तु कृष्णः । सा पद्मिनी स तु वसुमान् । सा कान्तालका स तु राजराजश्च । सा रूपेण हरिणी स तु यशसा हरिणश्च इति । तथापि सा सुभद्राकृतिरिति दोलाकर्म करोति चेतः ।

अथ वा आः किमस्ति अगम्यागमनशङ्का भूपानाम् । रामो जनकसुतायामनुरक्तः । विचित्रवीर्यस्तु अम्बिकामुपयेमे । नदीसुतो वाहिनीपतित्वमाप ।

राजनीतिं धिगब्जातधिक्कारक्षमलोचने ।
इलायामनुरक्तोऽभूदिलापुत्रः पुरूरवाः ॥ ३ ॥ इति ।

अथ वा महत्सु दोषारोपणमेव दोषः । यथाकथंचित्प्राज्ञेन कृतोपयमसाहाय्येन भवितव्यमित्यार्यवादः । लोके हि शत्रुमप्युपयमं नीत्वा

---

इति सुधा । 'धर्मो ना धनुषि प्रोक्तः' । 'आर्या वृत्तभेदः । 'प्रश्नोऽनुयोगः पृच्छा च' इत्यमरः । वनितापूर्वकानुरागाभावे रसाभास इति कविसमयः । 'भारातिशययोर्भरः' इति । **तावुभाविति** । अलका कुबेरपुरी । 'राजा उभौ च नृपतौ क्षत्रिये रजनीपतौ । यक्षे शक्रे च पुंसि स्यात्' इति सुधा । 'हरिणौ पाण्डुसारङ्गौ हरिणी चारुयोषिति । सुवर्णप्रतिमायां च हरितावृत्तभेदयोः ॥' इति । डोलेति पाठः प्रामादिकः । 'दोलायां शाद्वले दः स्याद्वैदूर्येऽपि च डं त्यजेत्' इति श्रीनाथः । **अथवेति** । 'जनकः पितृभूपयोः' इति । 'अम्बिका पार्वतीमात्रोर्धृतराष्ट्रस्य मातरि' इति । **राजनीतिमिति** । 'बुधपत्न्यामिडा चेला गवि वाचि क्षितौ तथा' इति । उपयमो विवाह इति तत्त्वार्थः । यमस-

महाराजसंपदमनुभवति। तिष्ठत्वेतत्। देवि, साधय साधनीयम्। अहमपि यथाशक्ति श्रीनिवासस्य कार्यैकदेशसाधको भवामि' इति बकुलापि श्रुततद्वचना निर्गत्य तदाश्रमात्

चित्रं स्मृतिपथं प्राप्ते यस्मिन्निष्कण्टका मही।
तं श्रीनिवासं संस्मृत्य यच्छुकोऽभूत्सकण्टकः॥ ४॥

इति सानन्दं चिन्तयन्ती कतिचित्पन्थानमतीत्य राजपुत्र्याः शरीरतापपनोदाय द्विजजनक्रियमाणरुद्राभिषेकं सुवर्णमुखरीतीरस्थमगस्त्येश्वरमासाद्य

सा वै पीनपयोधरा स च पुनः श्रीनीलकण्ठोऽभव-
त्स्थाणुत्वं प्रकटीचकार स च सापर्णाभिधानं गता।
तौ जातौ कलधौतकान्तिरुचिरावा चन्द्रमा तारकं
तद्दाम्पत्यमहो जयत्यनुकूलं श्रीपार्वतीशर्वयोः॥ ५॥

इति स्तुत्वा तद्विजपरिचर्यापरै राजदासीजनैः समं तत्पुराभिमुखी बभूव।

इतः श्रीनिवासस्तु चपलस्वभावो मरालकमाह—'वयस्य, बकुला तावद्गता। परं कार्यं साधयति वा न वा। प्रायो मुग्धाङ्गनानां चित्तं राजप्रसादवच्चपलम्। तत्र मन्दाक्षभूयिष्ठे किरातवन इव मृगो भीतभीतः प्रसरति मदनः। तत्र किं करणीयम्' इति। सोऽप्याह—'देव, मैवम्। यतः प्रायशो लोके वनितानां स्पृहास्थानं सौन्दर्यमैश्वर्यं च विद्या च।

---

मीपमिति शत्रुपक्षेऽर्थः। चित्रमिति। 'दमे सतीक्ष्णावयवे सूच्यग्रे क्षुद्रवैरिणि। रोमाञ्चे कण्टकः' इति। सा वै इति। मेघमयूरयोः। शुष्कतरुनिष्पर्णयोः। अर्थतः अन्तिमविशेषणे शब्दतः। योग्यसंबन्धदर्शनाज्जयतीत्युक्तम्। इति चमत्कारः। तत्त्वार्थस्तु—'महेश्वरे मयूरे च नीलकण्ठः' इति। 'स्थाणुः कीले हरे पुमान्' इति। 'अपर्णा पार्वती' इत्यमरः। 'कलधौतं रूप्यहेम्नोः' इत्यमरः।

तत्रोदाहरणं ताराद्वयं कलयतु देवः । तत्रैका तारा शृङ्गारदीक्षितत्वं राजत्वं कलानिधित्वं च चन्द्रे दृष्ट्वा स्पृहयांबभूव । द्वितीया तु सुग्रीवं गजादियुक्तं कलालापेन तोषयन्तं कपिराजमकामयत् । देव, इदं तावत्स्वैरिणीवृत्तम् । का वा कुलकन्या एकत्र प्रकटितानुरागा भूत्वापरत्र सक्तमानसा भवेत् । अयि रुक्मिणीजाने, किमत्र शङ्कया । तस्माद्गणासि वसन्तश्रीर्नियतिश्च मेलयति देव्या । सोऽप्यचिरादेव महोत्सवो विश्वं विस्मापयति' इति ।

अथ देवोऽप्यचिन्तयत्—'लोके पुरुषः केवलं सरलो न स्यात् । सरलसच्छोभः कुचभारः पीड्यते । नवनवकपटोल्लसितो मान्यो भवति । वक्र एव गुरुरिति सद्वृत्तशास्त्रम् । भगवान्नारायणोऽपि महामायायुक्त एव पुरुषोत्तमो जातः । अतः कपट एव सर्वार्थसाधकः' इति विचिन्त्य भारतसमरभूमिरिव गुल्मोद्भासिनी, वर्षासरिदिव मध्यदेशोल्लसत्पोता, विन्ध्याटवीव वेत्रलतावती, शंभुमूर्तिरिव कदर्पकमालालंकृता, प्रावृट्लक्ष्मीरिव व्यालम्बिपयोधरा धर्मदेवता भूत्वा नारायणपुरं प्रविश्य निशि पौरविलासं ददर्श । तत्र कश्चिद्विलासी कांचन स्त्रियं वक्ति—

'नीलाम्बरासि वामोरु मुसलं च करे तव ।
योग्या तवास्तु रामाख्यातनुयुद्धं भजाधुना ॥ ६ ॥' इति ।

---

गुरुपत्नी वालिभार्या चेति ताराद्वयम् । शोभना ग्रीवा यस्य सः । इत्यनेन सौन्दर्यमुक्तम् । कलालापो विद्यालाप इति चमत्कारः । कलोऽव्यक्तमधुर इति तत्त्वार्थः । **अथ देवोऽपीति** । सरलश्चासौ सच्छोभश्चेति प्रकृतोपयुक्तार्थः । कुचभारपक्षे तु सरेण हारेण । कपटः । पक्षे—पटः । अनृजुबुद्धिः । पक्षे—मात्राद्वयात्मको गुरुवर्णो वक्ररेखया दर्शनीय इति तत्संप्रदायः । महति दीर्घसंयुक्तशीर्षके । 'दुर्वहा मायेत्यविवेवि नियतिर्मोहिनीति च । प्रकृतिर्वासनेत्येवं तवेच्छानन्त कथ्यते ॥' इति श्रीभाष्यम् । गुल्मो वेत्रपुटिका । पक्षे—व्यूहभेदः । 'यानपात्रे शिशौ पोतः' इत्यमरः । 'कपर्दकः शंभुजटावराटकयोः'

अपरः कस्याश्चन वृत्तान्तं सखायं प्रत्याह—

'ज्यावल्लीलुलिता शिवस्य मलिनं चक्रं नखाङ्कोल्लस-
त्कोदण्डं मुकुलीबभूव च शरस्याद्यावतारक्रमः।
आयस्ता सुमवाटिकाशिथिलितप्रायांशुकः स्यन्दनः
प्रायेणाब्जमुखी सखे रिपुरणश्रान्तेव संलक्ष्यते ॥७॥' इति।

कश्चिदपरां मुग्धावस्थामारभ्य क्रमेण रूढयौवनां कामुकीं वर्णयति—

'यत्पुष्पेषुशिलीमुखावृतिरभूत्सौरभ्यमासीत्ततः
पुष्पं चोत्कलिका च पल्लवकुले सारक्तता ते ततः।
पश्चात्सद्विटपालिवेष्टनविधिः पश्चाद्रसापेक्षिता
यस्यास्तद्विरला लता विजयते सा कापि नेत्रोत्सवः ॥ ८ ॥' इति।

---

इति। धर्मदेवता त्रैकालिकवृत्तान्तकथका नारीभेदः। **ज्यावल्लीति**। शिवस्य ज्या मौर्वी शेषः। अत्रोपमेयं विहायोपमानेनैव कार्यनिर्वाहः। रूपकातिशयोक्त्यलंकारः। अतः शेषशब्दस्यार्थो वेणी। तत्सदृशत्वात्। लुलितेति रतान्तचिह्नम्। अतो रिपुरणश्रान्तेवेत्युक्तम्। रिपुर्मदनः शिवस्येति सर्वत्र संबध्यते। एवमग्रेऽपि। चक्रं रथाङ्गम्। चन्द्रः मुखम्। मलिनं म्लानम्। कोदण्डं धनुः। मेरुः स्तनः। शरो नारायणः तस्याद्यावतारो मत्स्यः नेत्रम्। सुमवाटिका तत्पुष्पभूतं चन्द्रस्थानत्वात्। आकाशं मध्यः। स्यन्दनो रथः। भूमिर्नितम्बः विस्तृतत्वात्। शिवस्य त्रिपुरहृतिकाले शेषादयो मौर्व्यादयो जाता इति पुराणम्। सादृश्यं सर्वत्र यथासंभवमूह्यम्। **यत्पुष्पेष्विति**। लोके तावल्लतानामादौ जलापेक्षा ततश्च स्थूलशाखारोहणं किसलयोद्भेदः कोरकोद्गतिः कुसुमोद्गमः सौरभ्यं भृङ्गावलिरिति क्रमः। अस्या लतायास्तु न तथा। किं तु आदौ भृङ्गावृतिः ततः सौरभ्यमित्यादि व्युत्क्रमस्य दृष्टत्वात् विरला लतेत्युक्तम्। लोकविलक्षणेत्यर्थः। नेत्रोत्सव इति कार्यकारणयोरभेदः। अत्र लताशब्दाद्वनिता गृह्यते। तथा हि पुष्पेष्विति। भिन्नं पदम्। शिलीमुखा भृङ्गा इति लतापक्षे। वनितापक्षे। एकमेव पदम्। मदनबाणाः। सौरभ्यं परिमलः। पक्षे—चारुत्वम्। 'पुष्पं विकासे कुसुमे स्त्रीणां रजसि च स्मृतम्' इति। 'उत्कृष्टकोरकाः।

काचिद्वनिता यैरेवाक्षरैः स्वपुरुषः संलापयति तैरेवाक्षरैः प्रतिवक्ति— 'वीरायिते नैपुण्यं दर्शय । मेखलाभियोगो न सुखाय । रामाधिकस्वभावाद्धृदयंगमश्रीरसि । सरलता ते लोकोत्तरा । सन्मालानुगुणनायकगुणोल्लसितसंपत् । अधरकृतसकलबन्धुजीवरुचिरसि । सर्वदोरुसंपदा मनो हरसि । रुच्यतिरेकान्मामधः करोषि । त्वद्रत्या विस्मयान्वितं मे चेतः ।' इति ।

कश्चित्स्त्रियं स्तुवन्निव निन्दति—'मुग्धे सुप्रियासि । अतनुकलहप्रियेतिरमणीयासि । च्युतमाने किं बहुभाषणैः ।' इति ।

काचन विटं स्तुवन्ती धिक्कुर्वती स्वसुतां शिक्षयति जरद्वेश्या— 'मुग्धे, मनोजातविकारमेतस्मिन्मा कुरु । वृथैवानेन सह जल्पन्त्यास्तव

---

पक्षे–उत्कण्ठा । 'पल्लवः स्यात्किसलये षिड्गशृङ्गारयोरपि' इति । 'विटपः पल्लवे षिड्गे विस्तारे स्तम्बशाखयोः' इति । 'रसो गन्धरसे जले । शृङ्गारादौ विषे वीर्ये तिक्तादौ द्रवरागयोः । देहधातुप्रभेदे च पारदस्वादयोरपि' इति हैमः । **वीरायित इति** । वीरायितमुपरिसुरतम् । पक्षे–हे वीर, अयि ते तवेति । मे मम खलायाः परकीयायाः । पक्षे–'स्त्रीकट्यां मेखला काञ्ची' इत्यमरः । अयं परिहृतान्यासक्तिरुपरिसुरतेन तोषणीयस्तत्प्रतिबन्धकीभूतां काञ्चीं परिहरामीति भावः । 'खलः कल्के भुवि स्थाने क्रूरे कर्णेजपेऽधमे' इति । अधरेऽधरोष्ठे । बन्धुजीवः शोणपुष्पभेदः । रुचिः कान्तिः । पक्षे–नीचस्थाने बन्धुभूतशरीरिणः स्पृहा । 'अधरस्तु पुमानोष्ठे हीनेऽनूर्ध्वेऽपि वाच्यवत्' इति । ऊरुः । पक्षे–उरुः । रुचिः कान्तिः । मा लक्ष्मीः । पक्षे–स्पृहा । अस्मच्छब्दद्वितीया । यावन्ममोपरि सुरतापेक्षा तावन्न क्षमसे । समरत एव प्रवर्तत इति भावः । रतिः सुरतम् । पक्षे–आसक्तिः । **मुग्ध इति** । सुन्दरि, प्राणप्रियासि । पक्षे–मूर्खे सुप्रिया न । मदनः । पक्षे–अनल्पः । 'प्रकर्षे लङ्घनेऽप्यति' इत्यमरः । मानः कोपभेदः । पक्षे–बहुमानः । **काचन विटमिति** । मानसं जातविकृति । निष्कारणमेव कोपभाषणैः प्रेमनाशः । रात्रिः । अन्तं नाशम् । सूर्यः कमलानामास इति

स्नेहक्षय एव फलं स्यात् । यथा निशान्तं न याति तथा कुरु । अचिरादेव वसुमानागच्छति । यश्च हिततरः पद्मिनीनाम् । ततः परमनेन किं ते प्रयोजनम् ।' इति ।

काचिद्वेश्या गृहकृत्यनिवेदनव्याजाद्दुहितरं शिक्षयति—'अनर्घ्यमणिताभिज्ञे, कण्ठस्थं स्नेहप्लुतं नायकं सत्कुरु न बन्धनं प्राप्नोति सुरभिश्च तन्न पश्यसि कुतः । दुर्वत्से, प्रवृत्तिं जानीहि । क गता गुणाः । न पात्रे ते प्रणयः' इति ।

काचित्सखी चतुरङ्गलीलानिवेदनव्याजेन जारं बोधयति—'प्रियसख, नन्वस्याः कुञ्जरं गृहाण । स्मरनवाजिकृतचातुर्यमस्याः पश्य । पश्य सेनामेनां त्वन्निकटगाम् । प्रकटीकुरु रथम् । पात्रं मा त्यज । योजय बन्धे' इति । एवमत्रान्तरे

---

स्तुतिः । धिक्कारपक्षे मन्मथविकारम् । द्रव्यदानं विना प्रीतिपूर्वकम् । तैलनाशः । 'निशान्तपस्त्यसदनम्' इत्यमरः । द्रव्यवान् स्त्रीविशेषाणामाप्तः । अनर्घ्येति । मणिता रत्नत्वम् । कण्ठो गलः । नायको हारमध्यमणिः । स्नेहस्तैलम् । तादृशो मणिः पुनर्न मिलतीति भावः । पक्षे—'मणितं रतिकूजितम्' इत्यमरः । समीपप्रदेशः । नेता । प्रेमेति । सुरभिर्गौः । बन्धनं न प्राप्नोति । दुर्वत्से दुष्टतर्णके विषये । गुणा रज्जवः । पात्रं भाजनम् । पक्षे—अयं नायको मनोज्ञः । नवं नूतनं घनं चेति समुच्चयः । दुर्वत्से दुष्टपुत्रि । प्रवृत्तिं प्रवृत्तिमार्गम् । संन्यासिवन्निवृत्तिमार्गासक्ता मा भवेति भावः । सौमनस्यादयः । योग्यः । 'योग्यभाजनयोः पात्रम्' इत्यमरः । 'वत्सः पुत्रादिवर्षयोः । तर्णके नोरसि क्लीबे' इति । चतुरङ्गेति । कुञ्जरं गजम् । वाजी अश्वः । न स्मर । सेना सैन्यम् । पश्य पश्येति योजना । रथं स्यन्दनम् । कर्णाटका 'रथ' इति महाराष्ट्रा 'उष्ट्र' इति कथयन्ति । पात्रं मन्त्री । बन्धस्तल्लीलाप्रसिद्धः 'मात' इति भाषा । पक्षे—कुन्तलम् । जात्येकवचनम् । स्मरनवाजिर्मन्मथनवयुद्धम् । पश्य । इनेन सहिता सेना । भर्तृमतीत्यर्थः । तां पश्य । पौरुषं प्रकटीकुरु । इदं वस्तु योग्यम् । बन्धः कामशास्त्रे प्रसिद्धः । 'कुञ्जरौ करिकुन्तलौ' इति । 'रथः पौरुषदेहयोः' इति । 'पात्रं तु

लसमानसप्तपत्रा गलितघनध्वान्तनिकररमणीया ।
शरदः प्रभातवेला बभार लीलां झटित्येव ॥ ९ ॥

अथोदिते सूर्ये तत्र तत्र कालत्रयवृत्तान्तं कथयन्ती राजभवनवीथिकां प्रविश्य तत्रापि जनकदम्बवेष्टिता धर्मदेवता तत्तद्वृत्तान्तं कथयति स्म । तथाहि ।

कामपि वेश्यां प्रति—'पूर्वेद्युर्द्वारोपान्त एव कश्चिद्भुजङ्गो दृष्टः । स त्वया मन्त्रबलाद्बन्धे निवेशितः ।'

कंचन विप्रं प्रति—'अये, त्वया रात्रौ रामाराधनं कृतम् । इदानीं बहुधान्यालाभचिन्तया म्लानमुखोऽसि । पुण्डरीकनयनाराधनं कुरु । फलवान्भवति ते मनोरथः' इति ।

कंचन वणिजं प्रति—'रात्रौ त्वया नीवी मोचिता । इदानीमपि मधुराधरागमनं चिन्तयसि । सत्यानृतवृत्त्या ते कार्यसिद्धिः ।'

दुर्गतं प्रति—'ग्रीष्मे वसूल्लासं पश्यसि ।'

अपरं प्रति—'सूर्येऽस्तमिते श्यामालाभो भवति ।'

अन्यं प्रति—'मध्याह्ने मित्रं स्वच्छमवगच्छसि ।'

अन्यम्—'पौर्णमास्यां प्रसन्नं राजानं द्रक्ष्यसि ।'

---

कलयोर्मध्ये पर्णे नृपतिमन्त्रिणि । योग्यभाजनयोः' इति । **लसमानेति ।** सप्तपत्रः सप्ताश्वः सूर्यः । पक्षे–कदलीभेदः । 'वाहने च च्छदे पत्रम्' इति । तथाहीति । 'पूर्वेद्युः पूर्ववासरे' इति रुद्रः । धान्यम् । नारायणः । अन्या स्वैरिणी वनिता । 'नीवी स्त्री कटिबन्धनवसने मूलद्रव्ये परिपणे' इति । मधुरा मधुरादेशभूमिः । 'सत्यानृतं तु वाणिज्यम्' इति । पक्षे–वनिता किंचित्सत्या किंचिदसत्या तादृशी या वृत्तिः । 'मधुरस्तु प्रिये स्वादौ रसे च रसवत्यपि । मधुरा मधुरापुर्यां' इति । 'दरिद्रो दुर्गतोऽपि सः' इत्यमरः । अस्तः पश्चिमाद्रिः । श्यामा स्त्रीभेदः । पक्षे–रात्रिः । 'कावेरी स्यात्सरिद्भेदे पण्यनारीहरिद्रयोः' इति ।

विटम्—'कावेरी ते दुःखमपनुदति ।'

अन्यम्—'शरदि धात्रीदर्शनं भवति ।'

अन्यम्—'इन्द्रं प्रार्थय । संतानलाभो भवति ।'

मन्दपुत्रां प्रति—'वसन्ते तवाङ्गजः प्रौढो भवति ।' इति ।

एवं जनमात्रं विश्वासपात्रमापादयन्ती 'समर्थेयं कालत्रयवृत्तान्तमात्र-कथने' इति स्तूयमाना राजवल्लभयापि धरया चेटीमुखेनाकारिता राज-भवनमासाद्य देव्या पृष्टा 'क्षुधितास्मि । अन्नं देहि । ततः परं सर्वमपि ब्रवीमि' इति तज्जातिचापलं मध्ये मध्येऽभिनयन्ती श्रीबदरीनारायण-मल्लिकार्जुनवैद्यनाथश्रीरङ्गेशविरूपाक्षवीरभद्रनडगुण्डगोकर्णलिङ्गेति देव-ताः प्रार्थयन्ती, यष्टिकां चालयन्ती रुदन्तं शिशुं ताडयन्ती, 'अयि राजदास्यः, इयं राजाङ्गना यदुद्दिश्य पृच्छति सा विपदङ्गजातानुब-न्धिनी । महिष्या वृत्तमिदम् । किमये, न सुरभिवृत्तान्त एषः । किं तूष्णीं तिष्ठथ सत्यमसत्यं वा' इति मुहुर्मुहुस्त्रासयन्ती, 'अयि राजाङ्गने, ज्ञातमिदानीम् । इयमनङ्गपीडा विस्तरेण वक्तुं नावसरः । प्रकृतमनुस-रामि । तदाकर्णय भूतवृत्तान्तम्' इत्यकथयत् । तत्रान्तरे देवी सभयम् 'अयि धर्मदेवते, किं मत्पुत्र्याः पिशाचबाधेति भणसि । किं सत्यमस-

---

धात्री जनन्यामलकी वसुमत्युपमातृषु' इति । संतानः संततिः । पक्षे—देवतरु-भेदः । अङ्गजः पुत्रः । पक्षे—मदनः । अङ्गजातेति । लोके यावन्त उपद्रवाः सन्ति तावन्तः स्वयमुक्त्वा यदुपद्रवोच्चारणकाले श्रोतॄणां शिरःकम्पाद्यङ्गविकारो जायते स एवोपद्रव इति ज्ञात्वा तदनुसारेण फलाफलं वक्तव्यम् । यत्रकुत्रापि शिरःकम्पाद्यभावे किमये सत्यमसत्यं वेति किमपि नोच्यत इति भर्त्सनम् । इति धर्मदेवतास्त्रीणां संप्रदायः । तथा हि सा विपदवयवसमूहानुबन्धिनी । सैरभ्या इदं वृत्तम् । धेनुवृत्तान्तः । अशरीरपीडेति तज्जातिसंप्रदायाभिनयप्रकारः । तत्त्वार्थस्तु सा विपत् सुतानुबन्धिनी । राजभार्याया इदं वृत्तम् । वसन्तवृत्तान्त एषः । मन्मथपीडा । 'भूतं क्ष्मादौ पिशाचादौ जन्तौ क्लीबं त्रिषूचिते । प्राप्ते वृत्ते

त्यम्' इत्याह । सापि 'मूढे प्राभृतमवधारयेति वदामि । न पिशाचपीडेति । इयं किल वसन्ते कस्मिंश्चिद्वनप्रदेशे कंचन निर्जरं निर्जरपुण्डरीकं पुण्डरीकगर्वहारिनेत्रं नेत्रप्रभाजितचन्द्रं चन्द्रकुलावतंसं तं संमानितं पद्मासनादिभिरर्जुनवर्णेन घोटकेन वसनेन च विराजमानं राजमानहरेण वक्रेण भुजेन च शोभमानं शिवमिव सवलयकरं कमपि निषादचक्रवर्तिनमद्राक्षीत् । तत्र चाभिनिविष्टेयं कष्टां दशामवाप । तत्सत्यमसत्यं वेति विचारय ।'

शृणु राजाङ्गने, वर्तमानमपि । याचकजनतेव कामाभिभूता । चम्पकलतेवालिवर्गं न सुखयति । बौद्धचित्तवृत्तिरिव प्रसूनालोकनिस्पृहा । अशूरततिरिव शिलीमुखाद्भीता शुम्भभृत्यश्रेणीव सर्वदापिकाल्युद्विग्ना पतिव्रतेव पल्लवतल्पं नानुमोदते । केवलं तापीव तपतीयम् ।

अयि भूपकुटुम्बिनि, भविष्यमपि शृणु । अद्य श्वो वा तच्छबरयूनो धात्री बकुलमालाभिधाना आगच्छति कन्यार्थिनी । सा यदि कृतकृत्या तर्हीयं सत्कविवज्जीवति । द्रव्यत्ववत्स्वभावमवलम्बते । पार्वतीव कुलाचलख्यातिं प्रथयति । कमलपङ्क्तिरिव श्रीनिवासयोग्या भूत्वा वीरततिरिवातनुजन्यानन्दं तनोति ।

---

समे सत्ये देवयोन्यन्तरे तु ना ॥' इति मेदिनी। **इयं किलेति** । निर्जरपुण्डरीको देवव्याघ्रः । देवश्रेष्ठ इत्यर्थः । 'सिंहशार्दूलनागाद्याः पुंसि श्रेष्ठार्थगोचराः' इत्यमरः । नेत्रं वस्त्रम् । चन्द्रं सुवर्णम् । 'पार्थेऽर्जुनः केकिनि कार्तवीर्ये नेत्रामयेऽप्येकसुतेऽपि मातुः । वर्णे द्रुमे चाथ सिते त्रिलिङ्गो गव्यर्जुनी हेम्नि तृणेऽर्जुनं स्यात् ॥' इति रत्नः । वलयः । पक्षे—सवो यज्ञः । **वर्तमानमपीति** । सूना हिंसा । 'अहिंसा परमो धर्मः' इति बौद्धमतम् । पिकानामालिः । पक्षे—काली पार्वत्यवतारभेदः । तपति तप्ता भवति । पक्षे—तापी तु तपतीशब्दान्नदीभेदः । **भविष्यमपीति** । जीवो बृहस्पतिः । तद्वदाचरतीत्याचारार्थे क्विप् । स्वं द्रव्यं

देवि, कथितं कथनीयम्। इतः परं स्थातुं न शक्यते। दुष्टा मे सपत्नी। रौति शिशुरपि नाभिजातः। तदनुमन्यस्व। यामि यथागमम्' इति। एवमुक्त्वा गते कुहनाधर्मदेवतास्वरूपे श्रीनिवासे धरादेव्यामपि सत्यमाह धर्मदेवता। पुष्पसमयः पुष्पसमयश्च नर्तयति बालाजनमानसम्। कमलाशुगः कमलाशुगश्च दुःसह एव। भवतु सा का बकुलाभिधाना। पश्यामि तावत्। यदि तदागमनमनलीकं तर्हि धर्मदेवतोक्तमनुष्ठेयमेवेति चिन्तयन्त्यां परेद्युः प्रातरेव यथोक्तपरिवारा सागतैव बकुलमाला। तदनु राज्ञी सेयमेवेति विज्ञाय सानन्दं पीनपयोधराभ्यां तदुरस्थलमाघट्टयन्ती कुचोन्नत्यालिङ्गनापर्याप्तहस्तनिर्मोतारि कृतकोपाविष्करणा धातरि महाराजयोग्योपचारैः सत्कृत्य भवनं प्रापय्यागमनकारणमपृच्छत्।

साप्यवदत्—'देवि धरे, शृणु मदागमनकारणम्। यस्य वाणी स्नुषा सत्यपूता च। कामस्तनयः सत्यश्च। सुग्रीवो देहः अश्वश्च। अब्जमपहसति पदश्रीः नखश्रेणी च। भूरिशोभावहं वस्त्रं सौन्दर्यं च। सारसानुकारि नेत्रयुगलं वक्त्रं च। यस्मिन्राजनि द्वारकायां सुवृत्तस्य मणेर्वेधः सदानस्य गजस्य मदः सुवंशस्य वेणोः कण्टकाक्रान्तिः शूरजातस्य शनेर्मन्दता सुस्निग्धानां वनितानां मानहानिः सुवचसां शुकानां

---

भावो धर्मः। द्रव्यत्वमित्यर्थः। मदनयुद्धानन्दम्। पक्षे—अनल्पयुद्धम्। अभिजातो नेति नसमासः। इति निन्दा। तत्त्वार्थस्तु ब्रह्मा विष्णुनाभ्युत्पन्न इति पुराणम्। पुष्पकालः स्त्रीरजःप्रादुर्भावकालः। 'वसन्ते पुष्पसमयः' इत्यमरः। कमलाशुगो मन्मथः पद्मवायुश्च। 'आशुगौ वायुविशिखौ' इत्यमरः। **साप्यवददिति**। ब्रह्मभार्या। पक्षे—वाक्। मदनः अपेक्षा च। 'कामः स्पृहारेतसोः स्यान्निष्कामे मीनकेतने' इति। 'भूरिस्स्वर्णे बहौ रुचिषु' इति। 'सारसः पक्षिभेदेन्द्वोः सारसं सरसीरुहे' इति। **यस्मिन्राजनीत्यादि**। परिसंख्यालंकारः।

पञ्जरबन्धः सरसानां नदीनामधोगतिः । तस्य भगवतः श्रीनिवासस्य दासी कन्यार्थिनी प्राप्तास्मि ।' इति तदुक्तमाकर्ण्य संतोषनिर्भरा देवी राजानं शुद्धान्तमाहूय शुद्धान्तरा धर्मदेवतागदितं बकुलमालागमनं रूपविस्मापितमणिपुत्र्याः पुत्र्या दशां च निवेद्य विगलितवेद्यान्तरं चक्रे । सोऽपि सुरगुरुमानीय सभां विदितवृत्तान्तं चकार । स चाह वाचस्पतिः वर्षावासरेणेव सर्वतोमुखपूर्णेन हर्षेण—'रे रे राजकुलकमलिनीराजहंस,

कमला कमला यस्य तार्क्ष्यस्तार्क्ष्यौ धरापते ।
नन्दिनी नन्दिनी यस्य स ते राजन्वरो वरः ॥ १० ॥

यत्कीर्तिर्हसितं मुखे कुचतटे मुक्तासरश्चन्दनं
फाले सत्तिलकं सिताब्जकलिकोत्तंसस्तथा कर्णयोः ।
हस्ते हीरककङ्कणं सुधवलं वस्त्रं नितम्बस्थले
पादे राजतहंसको जयति सा दिक्पङ्कजाक्षीततेः ॥ ११ ॥

किं च मत्स्य इव सदा वनविहाररसिकः, कूर्म इवोद्धृतचन्द्रगोत्रः, वराह इव क्षमान्वितः, पुराणनृसिंह इव नृसिंहः, वामन इवोग्रमार्गणः, भार्गव इव सहस्रबाहुगर्वहरः, राम इवाचलोद्भूतिभूषितः, कृष्ण इव भद्रानन्द-

---

'शूरश्चारुभटे सूर्ये' इति । **स चाह वाचस्पतिरिति** । सर्वतोमुखं जलम् । **कमलेति** । 'कमला श्रीवरनार्योः' इति । 'तुरंगगरुडौ तार्क्ष्यौ' इत्यमरः । नन्दिनी गङ्गा । नन्दिनी पुत्री । 'नन्दिनी नलिनी सीता मालती च मलापहा । विष्णुपादाब्जसंभूता गङ्गा' इति स्मृतिः । 'वरो जामातरि वृतौ देवतादेरभीप्सिते । विङ्गे पुंसि त्रिषु श्रेष्ठे कुङ्कुमे तु नपुंसकम् ॥ मनाक्प्रिये वरं क्लीबे केचिदाहुस्तदव्ययम् ॥' इति । यत्कीर्तिः रजतसंबन्धी पादकटकः । **किं च मत्स्य इवेति** । अवनम् । पक्षे-वनम् । चन्द्रगोत्रं सुधांशुकुलम् । कनकाचलो मन्दरः । 'क्षितिक्षान्त्योः क्षमा' इत्यमरः । मनुष्यश्रेष्ठः । पक्षे-अवतारभेदः । उग्रमार्गणः शिवबाणः । पक्षे-क्रूरयाचकः । सहस्रबाहुर्बाणासुरः । पक्षे-कार्तवीर्यः । चलने अचला । उद्भूतिरुत्कृष्टैश्वर्यम् । पक्षे-अचला भूमिस्तस्या सुत उत्कृष्टा भूतिरुत्प-

दायकः, बुद्ध इव नयज्ञप्रीतः कल्कीव सुकृतोद्भवनिदानम् । अथवालमुपमित्या । स एव मत्स्यादिरित्यार्यवादः ।

भद्राख्यः प्रमदोज्ज्वलश्च सततं यो राजहंसश्रिया
भ्राजिष्णुः सुकुमारतां समगमद्यो वै घनोद्भासितः ।
स श्रीमाञ्जयति प्रकाममसुरश्रेणीकृपाणी हरि-
र्गङ्गावद्गजगण्डवद्गगनवद्गाङ्गेयवद्गेयवत् ॥ १२ ॥

इति यावद्वदति तावत्कश्चिद्राजमन्त्री बहुश्रुतो नाम कथयांबभूव—'भो देव, अनेन सुरपुरोधसोक्तमाकर्णयता मयापि किंचित्स्मृतमिदानीम् । जानाम्यहं तम् । स हि कृतदशावतार इति सत्यमेव । तथाप्युक्तगुणान्न पश्यामि । तथाह्येनं मत्स्यावतारे नीरसंचरणचञ्चलं प्राहुः, कौर्म्येऽप्यवतारे धृतमन्दरागम्, वाराहे कुप्रीतियुक्तम्, नारसिंहे कयाधुतनयानन्दित इति, वामनावतारे बलिविरोधेन सवनं गत इति, भार्गवावतारे अर्जुनद्विडिति, रामावतारे शरभङ्गमवापेति, बौद्धावतारेऽहिंसानन्दं व-

---

त्तिर्यस्याः सा सीता । भद्रा कृष्णवनितामेदः । नयज्ञा नीतिज्ञाः । 'नयो न्याये' इत्यमरः । पक्षे—यज्ञप्रीतो न । सुकृतं श्रेयः । पक्षे—कृतं युगभेदः । उपमितिः सादृश्यम् । **भद्रेति** । भद्राख्यः 'कृष्णेति मङ्गलं नाम' इति स्मृतिः । 'क्व च नारायणेत्येतद्भगवन्नाममङ्गलम्' इति श्रीभागवतम् । गङ्गापक्षे भद्रेति गङ्गायाः प्रवाहभेदः । प्रमदः संतोषः । गजगण्डपक्षे—प्रकृष्टो मदो दानम् । राजहंसश्रीः राजश्रेष्ठसंपत् । गगनपक्षे—चन्द्रसूर्यशोभा । 'सुकुमारं तु कोमलम्' इत्यमरः । गाङ्गेयपक्षे—षण्मुखलम् । घनो मेघः । गेयपक्षे—वाद्यभेदः । 'घनः सान्द्रे दृढे दार्ढ्ये विस्तारे मुद्गरेऽम्बुदे । संघे मुस्ते घनं मध्यनृत्तवाद्यप्रभेदयोः ॥' इति । यथोचितं लिङ्गव्यत्ययः । **तथाह्येनमिति** । नीरसं निर्वीर्यमाहुरिति निन्दा । नीरं जलमिति तत्त्वार्थः । एवमग्रेऽपि । मन्दा मूढाः । पक्षे—अगः पर्वतः । कुत्सितप्रीतिः । धुतनयः कम्पितन्यायः । अयं कया वनितया नन्दित इति नृसिंहमाहुर्जना इति योजना । पक्षे—कयाधुर्हिरण्यकशिपोर्भार्या तत्तनयः प्रह्लादः । बलिभिर्विरोधः ।

भार, कल्क्यवतारे कलिसत्कृतमध्यवर्तीति । अपि च राम एव कृष्ण इत्याचार्यो वक्ति तदपि विचार्यम् । कृष्णो हल्यानन्दनः, रामस्त्वहल्यानन्दनः कथं जातः । देव, शृणु कृष्णावतारकथामपि । पालितार्जुनोऽपि भग्नार्जुनश्चासौ । किं च । बाललीलाचरित्रमस्ति तद्वाचामगोचरमस्माकम् । इतः परं देवः प्रमाणम्' इत्युक्त्वा तूष्णीं स्थिते सस्मिते राजमन्त्रिणि संदेहदोलारूढे भूपेऽपि देवाचार्ये कुपित इव 'हंहो राजवल्लभ, बहुश्रुत, प्रगल्भोऽसि श्लिष्टरचनायाम् । देवेऽप्यस्पृष्टदोषगन्धे शब्दसामर्थ्यात्कलुषमारोपयसि । शृणु रे,

गङ्गा पादसरोजपुष्परसति व्यालाधिपस्तल्पति
　त्रैलोक्यं च कुटुम्बति द्विरसनद्वेषी रथत्यण्डजः ।
कालः शस्त्रति शासनत्यनुदिनं सा वेदवाणी गृह-
　त्यब्धिर्यस्य रमाविलासरसिके तस्मिन्न किं सद्गुणाः ॥१३॥

किं च । सत्यव्रतदयाशाली न किं मत्स्यः, पृष्ठीकृतमन्दरागः कूर्मः, वसुमत्यलंकृतो वराहः, हिरण्यदानदक्षो नृसिंहः, विक्रमप्रसिद्धो वामनः,

---

स वामनः । काननम्; पक्षे—बलिर्दैत्यभेदः । सवनं यज्ञम् । अर्जुनं स्वर्णम् । पक्षे—कार्तवीर्यम् । बाणनाशः । पक्षे—शरभङ्गो ऋषिभेदः । सानन्दं यथा तथा अहिं सर्पम् । भ्रान्त इति भावः । पक्षे—अहिंसायामानन्दम् । कलिना कलहेन सत्कृतानां मध्यवर्ती । पक्षे—कलिः समीचीनं कृतं चेति युगभेदौ तयोर्मध्ये कल्क्यवतार इति पौराणिकाः । हली बलरामः । अहल्या गौतमपत्नीति तत्त्वार्थः । विरोधस्तु शब्दतः । अर्जुनः पाण्डवभेदः । वृक्षभेदश्चेति परिहारः । विरोधस्तु शब्दतः । हंहो आश्चर्ये । गन्धो लेशः । 'गन्धो गन्धक आमोदे संबन्धे लेशगर्वयोः' इति । **गङ्गेति** । कालशब्दवाच्या दुर्गैव चक्रायुधमिति यमकभारतव्याख्या । **किं च सत्यव्रतेति** । सत्यमनलीकमेव व्रतमिति स्तुतिः । सत्यव्रतो राजभेदः, तदर्थं मत्स्यावतार इति तत्त्वार्थः । वसुमतिश्च ।

सहस्रकरविरोधिप्रतापप्रसरो भार्गवः, धर्मदीक्षागुरू रामः, सत्यान्वितः कृष्णः, सर्वज्ञो बुद्धः, सत्कृतजनकः कल्की । अपि च यस्मिन्रक्षति क्षितिं आपणे आपणे रोहिण्यः, मण्डलेमण्डले राजानः, पञ्जरेपञ्जरे शुकाः, वनेवने इन्द्रद्रुमाः, वीथ्यांवीथ्यां निर्जराः, सुरतेसुरते इन्द्राण्यः, बिलेबिले चक्रिणः, अरण्येअरण्ये स्थाणवः। यस्मिन्सिन्धुराजनिग्रहोपायविदि दाशरथ्यभिन्ने श्रीकृष्णे देवे शबरत्वमपि न विस्मयाय । अन्यथा शबरी कथं तुष्येत् । तिष्ठत्वेतदस्मद्वचनम् । पुराणाचार्यः शुकः प्रष्टव्य इति वदति स्मृतिमात्रकृतसंनिधानो यथाविधि पूजितः कथयामास शुकयोगी—'राजन्, अवहितो भव। पुरा खलु त्रेतायां श्रुत एव स्मात्पठ्यमानेषु पुण्यप्रबन्धेषु कश्चिद्रामो नाम राजा दाशरथिरयोध्याधीश इति। यस्मिन्राजनि सुताराततितुल्यरूपश्चन्द्र इव ब्राह्मणगणो जैवातृकश्च सुमहितो वसन्त इव क्षत्रियचयः अशोकाङ्कितश्च । यस्य च राष्ट्रे गिरिविभ्रमा गजा इव द्विजाः समदा द्विजा इव गजाश्च । सुप्रतीकस्पृहणीयाः

---

पक्षे—वसुमती भूदेवी । हिरण्यं सुवर्णम् । दानं वितरणम् । पक्षे—हिरण्यकशिपोः खण्डनम् । 'विक्रमस्त्वतिशक्तिता' इत्यमरः । पक्षे—पादविन्यासः । सहस्रकरः। सूर्यः । पक्षे—कार्तवीर्यः । धर्म आचारः । पक्षे—धनुः । सत्यमनलीकम् । पक्षे—सत्यभामा । 'सर्वज्ञः सुगतो बुद्धः' इति । कृतं युगभेदः । **यस्मिन्निति** । रोहिणी चन्द्रभार्येति स्तुतिः । औषध इति तत्त्वार्थः । 'शुकः स्याद्रक्षसि मुनौ कीरे' इति । इन्द्राणी बन्धभेदः । सिन्धुराजः समुद्र इति रामपक्षे । कृष्णपक्षे—जयद्रथः । देवेति भिन्नं पदम् । शबरः किरातः । शबरी किरातस्त्रीति चमत्कारः । देवेशानां वरः श्रेष्ठः । शबरी नाम तापसी रामभक्तेति रामायणकथेति तत्त्वार्थः । **पुरा खल्विति** । सुतेष्वरातिषु च समस्वभावः । पक्षे—शोभननक्षत्राणां समानसौन्दर्यम् । 'रूपं स्वभावे सौन्दर्ये शुक्लादिपशुभेदयोः' इति । जैवातृक आयुष्मान्। पक्षे—तच्छब्दवाच्यः। सुमं पुष्पम् । अशोको वृक्षभेदः । पक्षे—महितः शोकाङ्कितो न । गिरि वाचि विगतभ्रमाः । पक्षे—पर्वतशोभाः । कलमा धान्य-

करिण्य इव तरुण्यः सार्वभौमयोग्यास्तरुण्य इव करिण्यश्च । कलमहितावाणीव केदारश्रेणी बहुधान्यहृद्या केदारश्रेणीव वाणी ।

राक्षसविभवानन्दश्रवणं हि समासु चक्रवर्तित्वम् ।
राजन्कुलालनिचये यस्मिन्रक्षति वसुंधरां राज्ञि ॥ १४ ॥
स हि सत्सुरागशोभं शैवशरा संकरं च सीतायाः ।
चित्रं चित्रं युगपद्राजकदम्बं च पीडितं चक्रे ॥ १५ ॥
अनुभूतचापभङ्गः पूर्वं पश्चाच्च दृष्टशरभङ्गः ।
वहुगुणभङ्गः सततं चित्रं चित्रं तथापि वीरोऽसौ ॥ १६ ॥
स जयति कश्चिद्धन्वी वालिस्वर्मार्गगमननिःश्रेणिः ।
छिन्नसुसंधिततारातटङ्कश्रीः कृपावेणी ॥ १७ ॥
आशुगजातहुताशनसात्कृतलङ्कापुरीतदीशो यः ।
सीतादर्शनकुतुकी सोऽव्यात्काकुत्स्थपुण्यपरिपाकः ॥ १८ ॥
विरहाग्निः शान्तिमगात्प्रविशति वह्निं विदेहकुलरत्ने ।
न हि चित्रं सीतायामुष्णेनोष्णं प्रशान्तिमेति किल ॥ १९ ॥'

---

भेदाः । पक्षे–कला अव्यक्तमधुरा महिता च । अन्यः । पक्षे–धान्यम् । अत्र कतिचिद्वाक्यानि प्रथमोल्लासस्थान्येव संतोषातिरेकाल्लिखितानि न प्रमादात् । **राक्षसेति** । राक्षसादयः संवत्सरभेदाः । यातुधानैश्वर्यसंतोषश्रवणं च परिसंख्यालंकारः । 'हायनोऽस्त्री शरत्समाः' इत्यमरः । **स हीति** । सुरागो मेरुः । पक्षे–रक्तिमा । पक्षे–मात्सर्यम् । पीडितं भग्नम् । पक्षे–गृहीतम् । पक्षे–दुःखितम् । **अनुभूतेति** । धनुः । बाणः । मौर्वी च । भङ्गो नाश इति चमत्कारः । तत्त्वार्थस्तु शैवधनुर्भङ्गः । शरभङ्गो ऋषिभेदः । गुणतरङ्गः । **स जयतीति** । 'निःश्रेणिस्त्वधिरोहिणी' इत्यमरः । हन्तेति भावः । वालिमारणेन छिन्नत्वम् । सुग्रीवमेलनेन संधितत्वम् । वेणी स्रोतः । **आशुगेति** । आशुगजातो वायुपुत्रः । तेन अर्पितो योऽग्निरिति लङ्कापक्षे । आशुगजातो बाणोत्पन्न इति तदीशपक्षे । काकुत्स्थसंबन्धि । सीतया स्वयमिन्द्रलोकं गतया काचन मायया सीता निर्माय

तदनु चित्रभानुप्रवेशनिर्गमपूता सीता प्राप्तराज्यं राममवादीत्—'आर्यपुत्र, मायासीतेयमायासिता दुरात्मना रावणहतकेन । तदियं भार्यापदे स्थापनीया' इति । रामस्तु तदाकर्ण्य 'प्रिये जानकि, एकपत्नीव्रतधरोऽहमिदानीं कृतकृष्णावतारस्तारेशमुखीमेनां मेनाङ्गजातामिव शिवो भूभृत्सुतामङ्गीकरोमि' इत्यभाणीत् । 'राजन्, सैवेयं पद्मावती स एव श्रीनिवासः । तयोरुचित एव संवन्धः । कोऽत्र संदेहः । किं विलम्बेन । लिख्यतां लग्नपत्रिका' इति । अथाकाशभूपतिस्तु सलग्नपत्रं भगवन्तं भागवतप्रसवस्थलीं शुकं वकुलया सह प्रेषयितुमिच्छन्कुमारीप्रसादस्थितां वकुलाम्

भटो गजः करो नीतिरपि वेङ्कटभूपतेः ।
वत्से सदा नरसमा भाति तच्छत्रुवर्गवत् ॥ २० ॥
कान्ताफालकटाक्षासिरूपवद्राजते सदा ।
रोहिताङ्कोल्लसत्क्रीडोद्यानं शेषाचलप्रभोः ॥ २१ ॥

इति श्रीनिवासगुणवर्णनप्रचुरं राजपुत्र्या सह संलपन्तीमाहूय फणीन्द्राचलं प्रेषयामास । स च शुकोऽपि सपक्षस्तदहरेव प्राप्य यथाशास्त्रं पूजितः ।

---

स्थापिता पञ्चवट्यां रावणेन हृतेति संप्रदायज्ञाः । मेनाङ्गजाता पार्वती । **भट इति ।** नरोऽर्जुनः । मदोदकसंपदा सहितः दानोदकसंपदा सहितः । नरा मनुष्याः । न विद्यते रसः शृङ्गारादि मा सन् यस्य(?)स नरसमः । नसमासः । नीतिशब्दानुसारेण स्त्रीत्वम् । 'इन्दिरा लोकमाता मा' इत्यमरः । कमलासंपदोऽनैक्यं कविसमयप्रसिद्धम् । एवमर्थपञ्चकम् । कान्ता फालेति । रोहिताङ्कः कुङ्कुमच्चिह्नम् । रुधिरच्चिह्नम् । मीनश्चिह्नं यस्य स मन्मथः । मृगरूपभूषम् । 'स्थानान्तिकोरुच्चिह्नेषु कोपे रूपकभूषयोः । नाटकादिपरिच्छेदे चित्र-

चञ्चलश्रीर्मया दृष्टः श्रीनिवास तवाहितः ।
अक्षरच्युतियुक्तोऽपि तादृगेवेति विस्मयः ॥ २२ ॥
त्वच्छत्रोरपि तन्नारी मता विन्द्वधिका प्रभो ।
स च संत्यक्तकुतलः सा परित्यक्तकुन्तला ॥ २३ ॥

इति सजयशब्दमुदीर्य

प्रतिपाद्य दुहितरं स्वां गङ्गां भर्त्रे स्रवन्तीनाम् ।
जगृहे तदीयकन्यां लक्ष्मीं कृष्णः कलत्रार्थी ॥ २४ ॥

इति बहुश्रुतप्रोक्तश्लोकवर्जं सर्वमपि वृत्तं स्वागमनकारणं च निवेद्य तोषयामास । स्थाने खल्वेतत् । न कस्य शुकवाणी तोषहेतुः । पुनश्च शुकः श्रीनिवासमाह—'देव, सर्वमपि वृन्दारकवृन्दमाकारय । अधुना तु सर्वत्र परिपूर्णवाहिनीकः समृद्धकमलः । उत्प्लवमानहरिकदम्बः स्फुरच्चापः ज्याहितकरः शूरराजतेजोपहारकः दृप्तसारङ्गनिकरः महाराज इव वर्षासमयः समाजगाम । यश्चाब्जयोनिरिव सर्वसत्त्वाकरः, संवर्त इव

---

युद्धेऽङ्क उच्यते ॥' इति लिङ्गाभट्टः । एवमर्थपञ्चकम् । **चञ्चलश्रीरिति** । चेत्यक्षरस्य वर्णस्य च्युत्या युक्तः चलश्रीर्भवति । चलचञ्चलयोरेकार्थत्वात्तादृगेवेत्युक्तमिति चमत्कारः । तत्त्वार्थस्तु नाशरहितच्युतियुक्तः । कदाप्युत्थानं नास्तीति भावः । **त्वच्छत्रोरिति** । तन्नारी तस्य वनिता । बिन्द्वधिका किंचिदधिका । कुतलापेक्षया कुन्तलस्य बिन्द्वधिकत्वमिति चमत्कारः । भूतलम् । केशाः इति तत्त्वार्थः । शुकवाणी स्त्रीति च । **अधुना त्विति** । हरिर्भेकः । चाप इन्द्रचापः । ज्याया भूम्या हितकरः । पक्षे—मौर्व्यामाहितपाणिः शूरः सूर्यः । राजा चन्द्रः । सारङ्गश्चातकः । **यश्चेति** । सत्त्वानि जन्तवः । पक्षे—सत्त्वं गुणभेदः । 'द्रव्ये पणे बले जन्तौ व्यवसायस्वभावयोः । गुणे वित्ते सतो भावे सत्त्वं गुणिनि च त्रिषु ॥' इति लिङ्गाभट्टः । 'खद्योतो ज्योतिरिङ्गणः' इत्यमरः । पक्षे—दिनमणिः

दृष्टानेकखद्योतप्रतापः, अनुकूलनायक इव सदावलाकामहितः, भारतरण इव हतसिन्धुराजः, द्रुपद इव शिखण्डिनन्दनः, दुर्जन इव भिन्नसेतुः, तालवनप्रदेश इव मत्तधेनुकः, त्वमिव संजातकीर्तिः आनन्दयति पार्वतीकटाक्ष इव सर्वम् । अपि चेदानीमसहमानतपःस्थितिविलासा घनश्रीबद्धस्पृहा मित्रस्य राज्ञोऽपि नानुग्राह्या इति सूचयन्ताविव पुष्पवन्तौ न नयनगोचरीभवतः । द्रावयन्त इव शुचिचरित्रं मदनगुटिकाधनुर्मुक्ताः कुमुदकलिका इव पतन्ति करकाः । जीवनप्रदेष्वपि चपलाश्चिरं संगतं न बध्नन्तीति कथयन्त्य इव मेघेषु क्षणं राजन्ति सौदामिन्यः । किं बहुना ।

राधोल्लासनिदानेन ऋक्षराड्दर्पहारिणा ।
अनेन हंसरिपुणा देवकीनन्दनायितम् ॥ २५ ॥

---

खद्योत इति च । बलाका बिसकण्ठिकेति पक्षिभेदः । पक्षे—अबलायाः कामस्य हितः । सेतुः आलुः । पक्षे—मर्यादा । धेनुको दैत्यमेदः । 'धेनुका तु करेण्वां च धेनावपि च कीर्त्यते । पुंसि दानवभेदे च' इति सुधा । सर्वं समस्तं जगत् । 'सर्वस्तु शर्वो भगवाञ्शंभुः कालंजरः शिवः' इति नामनिधानम् । **अपि चेदानीमिति** । तपश्चान्द्रायणादिः सान्तः । घनश्रीरविरलसंपत् । मित्रं सुहृत् । राजा भूपः । इति चमत्कारः । तत्त्वार्थस्तु घर्मर्तुः मेघसंपत् । चन्द्रसूर्ययोरितीवेत्युत्प्रेक्षा । 'एकयोक्त्या पुष्पवन्तौ दिवाकरनिशाकरौ' इत्यमरः । शुचिचरित्रं विशुद्धचरित्रमिति चमत्कारः । तत्त्वार्थस्तु ग्रीष्मचरित्रम् । 'शुचिर्ग्रीष्माग्निशृङ्गारेष्वाषाढे शुद्धमन्त्रिणि । ज्येष्ठे च पुंसि धवले शुद्धेऽनुपहते त्रिषु' इति सुधा । 'वर्षोपलस्तु करका' इत्यमरः । 'चपलश्चोरके चले । क्षणिके चिकुरे शीघ्रे पारदे प्रस्तरान्तरे ॥ मीनेऽपि चपलापि स्यात्पिप्पल्यां विद्युति स्त्रियाम् । पुंश्चल्यामपि' इति हैमः । संगतं संबद्धम् । **राधोल्लासेति** । 'राधा विद्युद्विशाखयोः । गोप्यां' इति हैमः । ऋक्षराट् चन्द्रः । पक्षे—जाम्बवान् । हंसः पक्षिभेदः ।

देव, अतः कथयामि । जम्बूशोभावहे सुमनःसंदोहसुन्दरे त्वयीव वर्षावासरे कृतवति दयां शरदि महोत्सवमनुभवतु देवः' इत्युक्त्वा च तदनुमत्या स्वाश्रमं गतवति ऋषिसार्वभौमे शुके बकुलाहस्तार्पितं पद्मावत्या वसन्तमिव सकलकण्ठशोभं ग्रीष्ममिव शुचितारमणीयमितं वर्षावासरमिव पयोधरसंबन्धसुन्दरं शरत्समयमिव राजच्चन्द्रगुणं हेमन्तमिव स्पृहणीयमित्रकरं शिशिरमिव तपःस्थितिज्ञापकं मौक्तिकहारं कण्ठालंकरणं विधाय कदागच्छेच्छरदिति चिन्तयन्

नवरसकमनीये शीतशीतस्वभावे
लसति सुघनसारोज्जृम्भणे वेङ्कटेशः ।
कविरिव नृमृगेन्द्राचार्यवाचां विलासे
विहरति स च वर्षावासरे श्रीनिवासः ॥ २६॥

इति श्रीमत्कवीन्द्रवर्यश्रीवेङ्कटाध्वरिकविराजकृतौ श्रीनिवासविलास-
चम्प्वां चतुर्थोच्छ्वासः ।

---

पक्षे—दैत्यभेदः । **देवेति** । जम्बूवृक्षभेदः । पक्षे—द्वीपभेदः । दयेति गमनविषये लोकोक्तिः । कण्ठः । पक्षे—कलकण्ठः । शुचयो धवलाः । तारा निर्दोषाः । मणयो मौक्तिकानि । ताभिर्यमिता बद्धाः । 'मुक्ताशुद्धौ च तारः स्यात्' इत्यमरः । पक्षे—शुचिता ग्रीष्मता । तया रमणीयमितं गतम् । प्रावृट्कालस्येदानीं वर्ण्यत्वात् । सुवर्णतन्तुः । सुहृत्पाणिः । पक्षे—सूर्यकिरणः । 'तपा माघे' इत्यमरः । **नवरसेति** । नवरसा नूतनोदकानि । पक्षे—नवसंख्याकशृङ्गारादिरसाः । घनसारो मेघश्रेष्ठः । पक्षे—कर्पूरम् ॥ इति श्रीधरणीधरविरचितायां श्रीनिवासविलासचम्पूटीकायां पूर्वभागे चतुर्थ उच्छ्वासः ॥

पञ्चम उच्छ्वासः ।

अथ तस्यां वर्षावासरकलारमण्यां क्षीणरसायां गतायां दृश्यादृश्यगौरपयोधरां हंसकलसन्नीरजपदां स्फुटपरिकलितनिर्मलरसां निरवग्रहराकासंपदभिरामाम् अच्छाच्छशुभ्रांशुकरमाप्रकटोपलक्ष्यमाणनक्षत्रमालाम् अतनुबन्धुजीवानन्दकारणं रम्भोरुश्रियं दधानां शुकव्याहारमणीयां स्फूर्जच्चन्द्रशालिनिशाभिरामां ललितमृणालभुजाभूषितां शरदं साक्षादिव पद्मावतीं विलोक्य द्विगुणितरणरणके श्रीनिवासे मरालकः पपाठ ।

वेणीगुम्फितकमलश्रेणी संसक्तचञ्चरीककुला ।
एणीदृगिवानन्दद्रोणी नैवास कस्य शरदेषा ॥ १ ॥
आमोदितकमलाशयमुद्बुद्धविधुप्रसादभूयिष्ठम् ।
श्रीकृष्णयोः सखीवन्नन्दतु देवः शरत्समयम् ॥ २ ॥ इति ।

अथ तेन प्रथमरसासारगर्भितेन श्लोकद्वयेन चमत्कृतो बलान्नीयमान इव मदनेन प्रयागमिव भारद्वाजसंचाररमणीयं स्वयशःसमूहमिव लसच्चन्द्रभासंकाशसौन्दर्यवहं स्कन्दमिवापहृतक्रौञ्चमदं पर्वतैकदेशमाश्रित्य मरालकमवादीद्देवः—'वयस्य, पश्य पश्य ।

---

**अथ तस्यामिति** । 'पदं व्यवसितत्राणस्थानलक्ष्माङ्घ्रिवस्तुषु' इत्यमरः । अवग्रहः प्रतिबन्धः । राका नवरजोनारी । शुभ्रांशुश्चन्द्रस्तस्य करमा किरणसंपत् । पक्षे—शुभ्रवस्त्रस्य रमा शोभा । बन्धुजीवः पुष्पभेदः । मदनव्यापारविषये यो बन्धुराप्ततादृशो यो जीवः शरीरी । चन्द्रेण सोमेन शालिनी या निशा रात्रिः । पक्षे—कर्पूरेण । 'निशाख्या काञ्चनी पीता हरिद्रा वरवर्णिनी' इत्यमरः । मृणालभुजा हंसेनेति तृतीया । भुजा अदन्तभुजा एवार्थः । 'मारो रणरणः कामः' इति । **वेणीति** । 'स्याद्वेणी केशबन्धेऽपि स्रोतसि' इति । 'द्रोणी काष्ठाम्बुवाहिनी' इत्यमरः । **आमोदितेति** । कमलाशयो जलाशयः । चन्द्रप्रसन्नता । पक्षे—लक्ष्मीमानसम् । विष्णुदया । **अथेति** । भारद्वाजः पक्षिभेदः । पक्षे—मुनिः । तत्संबन्धी । लसन्ती चन्द्रभाः स्वर्णकान्ति-

चित्रवर्णसमुल्लासः सर्वद्विजकुलाग्रणीः ।
शुकः कूजति सानन्दं निखिलश्रुतिसौख्यदः ॥ ३ ॥

इति श्रुत्वा मरालकोऽपि 'देव, तिष्ठत्वेतच्छुककूजनम् । किमनेनारुंतुदेन देवस्य । तच्छुककूजनं स्मरतु भवान्, यत्कंदर्पकालसर्पदष्टस्य देवस्य पतगराजमन्त्रः' इति भणति सति 'साधु भणितं वयस्यः' इति श्लाघयन्, स्मृतिमात्रकृतसंनिधानौ अनन्ताभिधानौ द्वावपि सपक्षावित्याहूय शेषगरुडौ 'भवद्भ्यां गिरिकृतप्रेमावासश्चतुर्मुखः शिवश्च सर्वामरगणैः सहागच्छेति वक्तव्यः' इत्याज्ञाप्य पत्रिकां च दत्वा प्रेषयामास। ततश्च ।

अभूत्पतङ्गाधिपतिः सपत्रो न तद्विचित्रं स यतो गरुत्मान् ।
चित्रं फणीन्द्रोऽपि तथेति यद्वा किं दुर्लभं तुष्यति वासुदेवे ॥४॥

अथ ताभ्यामाकारिताः सर्वे सबुधा अपि विबुधाः भवेन विभवेन च राजमानाः मानयुक्ता विमानयुक्ताश्च फणीन्द्राचलमगमन्देवाः । तदनु तानागतान्वीक्ष्य 'देव, एते शतानन्दकौशिकमित्राङ्गजशुक्रहरिप्रभृतयः सप्रमदाः सयमाः समृगकृत्तिकाश्लेषाः साषाढाः वैश्रवणतत्परा देवा मुन-

---

र्यस्मिन्स तं लसच्चन्द्रभासम् । काशाः शराः । पक्षे—चन्द्रकान्तिसदृशसौन्दर्यावहम् । क्रौञ्चः पक्षिभेदः शरदि निर्मद इति कविसमयः । पक्षे—पर्वतः । चित्रं किर्मीरवर्णः शुकादिकेष्वेकः । पक्षे—अद्भुताक्षरम् । 'वर्णो द्विजादौ शुक्लादौ स्तुतौ वर्णं तु चाक्षरे' इत्यमरः । 'वेदे श्रवसि च श्रुतिः' इत्यमरः । शुको वैयासकिः । अनन्तनामा गरुड इति भाष्यकृतो वचनम् । गिरि वाग्देव्यामिति सप्तमी । पक्षे गिरिः पर्वतः । **अभूदिति** । पत्रं गरुदिति चमत्कारः। पत्रिकेति तत्त्वार्थः । आकारिताः । विरभाववाचीति सर्वत्र शब्दतो विरोधः । परिहारस्तु बुधश्चन्द्रपुत्रः । भवः शिवः । 'व्योमयानं विमानोऽस्त्री' इत्यमरः । **देव, एते इति** । ब्रह्मेन्द्रसूर्यमन्मथवह्निवायवः । प्रमदा वनिता । मृगाद्यो नक्षत्रभेदाः । कुबेरासक्ताः । इति देवपक्षे । ऋषिपक्षे तु—मित्राङ्गजो मैत्रेयः । ऋषभपुत्रः । प्रमदः

यश्च समागताः । तत्रैते देवाः सकामा अप्यकामाः, देवस्त्रियः सशिवा अप्यनुग्राः, राशयः सतुला अप्यतुलाः, ग्रहाः ससूर्यमङ्गला अप्यसूर्यमङ्गलाः । किंचैतौ द्विजराजौ गरुडसुधांशू, मरुन्नियन्तारौ वायुपुरंदरौ, नियमिततारौ गुरुसूर्यौ, शिखिख्यातौ स्कन्दवैश्वानरौ, आत्मभुवौ मदनचतुर्मुखौ ।

अपि चान्ये केचन शिवा इव समङ्गलाः गाङ्गेयभूषिताश्च, अग्नय इव रोहिताश्वाः सहेतयश्च, ब्राह्मणा इव सत्यासक्ताः सुकुमाराश्च गीर्वाणा इति विष्वक्सेनप्रदर्शितान्निरीक्ष्य सहर्षस्तममजीगदत्—'सेनापते,यथायोग्यमेतानवतारय' इति । स तु देवेन पूर्वमेवाविताास्तारिताश्चेति वदन्नेव निर्गत्य क्षणात्पुनः प्रविश्य व्यजिज्ञपत्—'देव, मद्गमनात्पूर्वमेव सुमनोवाटिकायां स्थितः पुरंदरः । वरुणस्त्वाकाशगङ्गानिकट एव सानन्दः । धनदः पुण्यजनावासयोग्यं गिरिशिखरमेवाश्रितः । रम्भावने जागरूकस्तिष्ठति नलकूबरः । भानुः काञ्चनलताभिरामां छायामाश्रित्य क्रीडति । स्कन्दस्तु देवसेनां क्षणमपि न मुञ्चति परेभ्यः शङ्कमानः ।

---

संतोषः । यमो योगाङ्गभेदः । 'पालाशो दण्ड आषाढः' इत्यमरः । शास्त्रश्रवणासक्ताः । अतुला असमानाः । असूरीणाममङ्गलाः । **किं चेति** । 'गरुडे चन्द्रे द्विजराजः' इति । सूर्यो नेत्रेन्द्रियनियामक इति शास्त्रम् । शिखी मयूरस्तेन ख्यातः । पक्षे—शिखावानिति ख्यातः । 'शिखिनौ बर्हिपावकौ' इति । **अपि चान्य इति** । 'मङ्गला सितदूर्वायामुमायां पुंसि भेषजे । नपुंसकं तु कल्याणे' इति सुधा । 'हेतिः स्यादायुधज्वालासूर्यतेजस्सु योषिति' इति सुधा । सत्यो ब्रह्मलोकः । विष्वक्सेनो विष्वक्सेनापतिः । **देव मद्गमनादिति** । सुमनसः पुष्पाणीति तत्त्वार्थः । देवा इत्यर्थान्तरम् । तेन चमत्कारः । एवमग्रेऽपि । आकाशगङ्गेति शेषाचलतीर्थविशेषः । पक्षे—भागीरथी । कांचनेति भिन्नं पदम् । छायामनातपम् । पक्षे—काञ्चनलता हेमवल्ली । छायाभिधानाम् । 'शतक्रतो रूपवती देवसेनेति या

चन्द्रस्तारोल्लसितमण्डपे निवसति । शिवः परितः पर्वतभुवं परिपालयन्वर्तते । मृत्युर्वेङ्कटभूपालवैरिषु स्थापितः । मदनस्तु देवस्य निकट एव धृतशरचापो यामिकाव्यापारासक्त इति विदितमेव देवेन । देव, अन्यत्किंचिद्विज्ञाप्यमस्ति । इन्द्रस्त्वहिहेतिवासुकिप्रभृतिः सर्पगणो बिभेति । वायुर्बहुधोक्तोऽपि नैकत्र तिष्ठति । वृश्चिकराशेः स्थलं न मिलति पराशरः कन्याराशिनिकटं यथा न गच्छेत्तथा देवेन वक्तव्यः । स्कन्दवरुणौ वाहिनीपतित्वे प्राप्तकलहौ । अपि चायं वैश्वानरोंऽशेन वैवाहिकानामुदरं प्रविश्य व्याकुलयति । तदत्र का गतिः । इतः परं देवः प्रमाणम्' इति । देवेऽपि स्मेरवदने कृतं चतुरालापेन । सर्वोऽपि जनः क्षुधातुर इति वद । कथय चतुराननं मद्वचसा' इत्याज्ञापयति विष्वक्सेनोक्तः परमेष्ठी कुबेरमवदत्—'धनाधिपते, देवः श्रीनिवास आज्ञापयति तावन्मीनमेषकुम्भराशयो वर्तन्ते । देवानाममृतं स्वामिसरसि पुरैव स्थापितम् । काष्ठार्थं दिग्देवताः सन्त्येव । पयोर्थं मेघा आज्ञापिताः । अलंकृतयः कविनार्पिता एव । अन्यदापादनीयं भवति । तस्माद्भवानेव शरणम्' इति । 'तथास्तु' इति तेनोक्ते गृहीत्वा द्रव्यजातं तत्तद्योग्यं जनं तत्तद्व्यापारे नियोजयामास । तथा हि—कामदाने शंकरम्, सुरभिद्रव्यसाधने वसन्तम्, आशुगमनागमनव्यापारे वायुम्, चन्द्राम्बरम-

---

सुता । सा महेन्द्रेण रत्यर्थं भार्यात्वेनोपपादिता । उदीर्णसेनापतये महासेनाय सुव्रता ।' इति वायुपुराणम् । तारं रजतम् । पर्वतभूः पार्वती । मृत्युर्देवभेदः । पक्षे मरणम् । **देवेति** । 'अहिर्वृत्रेऽप्यहिः सर्पेऽप्यहिः क्रूरे' इति । पराशरो दाशकन्यायामासक्तोऽभूदिति कन्याराशेर्भयमिति भावः । कृतमलम् । 'दारुदारुहरिद्रयोः । प्राच्यादि दिशि चोत्कर्षे काष्ठशब्दः' इति लिङ्गभट्टः । 'पयः क्षीरं पयोऽम्बु च' इत्यमरः । कविः शुक्रः । **तथा हीति** । कामदानं मन्मथखण्डनम् । चन्द्राम्बरमणयः सुवर्णवस्त्ररत्नानीति तत्त्वार्थः । सुधांशुभास्करयोर्मोक्ष-

णिग्रहणमोक्षव्यापारे स्वर्भानुम्, वनिताजनसत्कारे मदनम्, अतनुदीपप्रबोधे चन्द्रम्, आर्याज्ञापालने स्कन्दम्, गीतादिश्रवणे वैश्रवणम्, सर्वव्यापारेषु मङ्गलम् इति।

सभास्तारेषु मुनिषु देवेषु च नरेषु च।
चित्रं चित्रं विशेषेण यद्व्यासोऽभूत्सभारतः॥ ५॥

ततश्चाष्टवर्गस्नानमाचरितुं प्रवृत्तस्तत्कालजातलक्ष्मीस्मृतिरचिन्तयद्देवः—'लोके सपद्मत्वेन सपङ्कोऽपि कासारो भुवनाधारो भवति। सकमल एव चन्द्रो दोषाकरोऽपि सर्वज्ञचूडामणिख्यातिं लभते। सम एव सर्वैः श्लाघ्यते। सश्रीकः स्वयमर्धपुरुषोऽपि चण्डीं वशवर्तिनीं कुरुते शिवः' इति। अत्रान्तरे विदितप्रभुभाव उष्णरश्मिः सार्थकयन्निव मित्रभावं प्राप्य करवीरपुरं तत्र च क्षीरपारावारकन्याम्

'भाषासरहयहेषाशेषाम्बुजलोचनाशिरोभूषा।
शेषाहितल्पयोषा सैषा मय्यस्तु कलितपरितोषा॥ ६॥'

इति स्तुत्वा तयापि 'आगमनकारणं किम्' इति पृष्टस्तां बभाषे—'देवि, शृणु। देवः श्रीनिवासो भुजङ्गराजशैले निवसतीति ज्ञातमेव खलु। स हि शरीरजातपीडया दूयमानमनाः काञ्चनलताङ्गीं कमलां कमलपा-

---

श्वेति चमत्कारः। अतनुदीपः 'दिवटी' इति भाषा। **सभास्तारेष्विति**। सभायां रतः। पक्षे—'महर्षिव्यासरचिते जम्बुद्वीपेऽपि भारतम्' इति। **लोक इति**। पद्मा कमला मा श्रीरिति चतुष्टयं श्रीवाचकम्। पङ्कः पापम्। भुवनं जगत्। इति चमत्कारः। सरोजं कर्दमः जलमिति तत्त्वार्थः। कमलो मृगः। अर्धपुरुष इति चमत्कारः। विषमार्धनारीवरः। 'चण्डी कात्यायनीदेव्यां हिंस्रकोपनयोषितोः' इति सुधा। **भाषेति**। सरहयः कीर इति कविसमयः। हेषा अश्वध्वनिः। शरीरे जाता या पीडा। सुवर्णवल्लीवदङ्गं यस्याः। लक्ष्मीम्। कमलं

णिमाश्लिष्य पूर्णकामो भवामीति त्वामाह। तदत्र शेषाचलं गतया भवत्या भवितव्यम्' इति । अथ क्षणादेव करवीरपुरान्निर्गतयोः सूर्याभिधानरमणीययोः स्वच्छायाह्लादकयोः पुष्करोल्लासिकरयोः गगनमध्यस्थितिश्लाघयोः शेषाचलनिकटं प्राप्तयोस्तपनक्षीराब्धिकन्ययोः प्रथमागते दिनेशे श्रुतदृष्टतत्कार्यः 'देव, आगता देवी' इति विज्ञापयति तस्मिन्नाश्लिष्य तमाह—

'श्रवणोल्लासकृद्यन्मे ताराश्वासनतत्परः ।
अनुभूतरसाश्लेषः सूर्य जैवातृको भव ॥ ७ ॥' इति ।

तदनन्तरं च प्राप्तां तदनुरूपदेहस्थितिस्तया सह स्वामिसरस्तीरे क्षणमासीनस्तां विगलितवेद्यान्तरामकरोत् । तदनु लक्ष्मीकरकमललापिततैलः पार्वत्या स्नानार्थमाहूतः स्नानपीठमारुरोह । तदा कश्चिदवसरपाठकः पपाठ—

'घनीभूतैः स्नेहैः प्रथममभिलिप्याब्जसदना
द्रवीभूतैर्लिप्तं तदनुरमणं सा कृतवती ।
हृदिस्थैः सुस्नातं सुरसनिकरैश्चित्रमधुना
कटाहस्थैः स्नातुं हिमगिरितनूजाह्वयति तम् ॥ ८ ॥'

---

पाणौ यस्याः । पूर्णेच्छः । इति रमया ज्ञातोऽयमर्थः । तत्त्वार्थस्तु शरीरजातो मदनः । काञ्चनेति भिन्नं पदम् । लताङ्गीं वनितामुत्तमस्त्रियम् । पद्मपाणिम् । आकाशराजसुतामिति यावत् । पूर्णकाम इति । **अथ क्षणादिति** । सूर्या नवोढा । गगनवद्दलग्नस्थितिः । **श्रवणेति** । श्रवणमाश्लेषा च नक्षत्रभेदः । तारा गुरुपत्नी । जैवातृकश्चन्द्र इति चमत्कारः । तत्त्वार्थस्तु श्रोत्रम् कनीनिका आलिङ्गनम् आयुष्मान् । **घनीभूतैरिति** । स्नेहः प्रेम । पक्षे-तैलम् । रसः

तत्र काचन भीमसेनतनुरिवोत्क्षिप्तघटा, काचिद्विन्ध्याटवीव महाकरीरा, काचिद्गजपङ्क्तिरिव मदोदकधाराकलिता, काचिच्चकोरीव निशोल्लसितचन्द्रजीवना, काचित्त्रयीतनुवत्कुङ्कुमरक्तकमलोद्भासितकरा, काचिद्विष्णुवत्पाणिधृतकमला देवं वनिताजनता स्नापयांबभूव ।

अथाकल्पादिभिरात्मानं सत्कृत्य शमी शमीमानीय स्थापितनान्दिः नारायणपुराभिगमनमतिं चकार देवः । ततश्च शुभयोगनक्षत्रयुजि मृदितपद्मावतीहृद्रुजि मुदिताकाशभूभुजि दिवसे वामभागे वक्त्रेषु च लसता कलधौतवर्णेन सरस्वतीपञ्चकेन युक्तः हंसयानः पुरतः चन्द्रवर्णावहीनमालौ शिवावुत्तरतो गजेन्द्रगमनौ दक्षिणतः शचीपुरंदरौ शरजातकीर्तिकलितौ वरुणस्कन्दौ पश्चिमतो ययतुः । अन्येऽपि यथायोग्यं निर्जरहृदयानन्दकन्दौ रतिमन्मथौ च ज्येष्ठाषाढोज्ज्वलौ पुनर्वसूल्लसितौ सूर्यसुधाकरौ च ।

मदिष्टदायी नमदिष्टदायी रसानुकूलो नरसानुकूलः ।
लसत्स्वरूपो नलसत्स्वरूपो मध्ये ययौ तार्क्ष्यरथः सलक्ष्मीः ९

एवं क्रमेण नगजाताभिरामं कतिचित्पन्थानमतीत्य, नत्वा च कपि-

---

प्रीतिर्जलं च । घटः कलशः । 'करिणां घटना घटा' इति च । 'वृक्षभेदे करीरः स्याद्घटे' इति । मदः कस्तूरी । हरिद्रोल्लासितकर्पूरोदका । कुङ्कुमेन शोणजलोद्भासितपाणिः । पक्षे—कुङ्कुमवच्छोणपद्मोद्भासितकिरणः । शमी शमवान् । **ततश्चेति** । वक्त्रचतुष्टये वेदस्वरूपं सरस्वतीचतुष्टयम् । (कलध्वन्यक्षरम् ।) वामभागे वनिता सरस्वती देवी रजतवर्णा एकेति सरस्वतीपञ्चकमित्यत्र विवेकः । 'सरस्वती नदीभेदे श्रीवाग्देवतयोर्गिरि' इति । शिवा पार्वती शिवश्चेति । शिवौ स्वर्णरजतवर्णौ । अहीनः सर्पश्रेष्ठः । शरजातमुदकसमूहः । पक्षे—शरजन्मा षडाननः । ज्येष्ठाषाढौ मासभेदौ । वसु किरणः । ज्येष्ठादित्रयं नक्षत्रभेदः । **मदिष्टेति** । विरोधः शब्दतः । परिहारस्तु नमतामिष्टदायी । रसा भूमिः । नरोऽर्जुनः । नलो राजभेदः । अतिसुन्दर इति जगत्प्रसिद्धः । **एवं क्रमेणेति** । नगजातं वृक्षसमूहः । पक्षे—पार्वती । शोभ-

लेश्वरम्, सुवर्णमुखरीतिख्यातां शुकाभिधानां व्यक्तिं दृष्ट्वा, नदीं च तीर्त्वा, महाकल्पसदृशेन वैवाहिकजनेन केनचिद्दिवसेन च सामोदं प्राप्य नारायणपुरवाह्योद्यानपुष्पवाटिकाप्रदेशम्, दृष्ट्वा च वियद्भूमिपालम्, शान्ते चान्योन्यपटवासप्रक्षेपव्यापारे, व्यासस्येव पुराणागमख्यातस्य, कृष्णस्येव महाविटपालिश्लाघ्यस्य, मेरोरिव नगललामस्य, मुक्तिन इव महाच्छायास्थितेः, सुकलत्रस्येव दृष्टप्रसवस्य, समराङ्गणस्येवेतस्ततः पतच्छिलीमुखस्य, सुरेश्वरस्येव सहस्रनेत्रस्य, चैत्यरसालद्रुमस्यालवाले क्षणमासीनः पद्मावत्या विरहविनोदनार्थं कल्पितं मन्दिरमध्युवास । तदनु मरालकस्तमुवाच—

'पाकस्थानं हिरण्यस्थलमथ च मघोरुत्सवस्थानमेत-
　त्प्रह्लादस्थानमेतत्कविवसतिरियं शम्बरस्थानमेतत् ।
भात्येवं गेहमेतत्पुनरसुरमणीसात्कृतं तादृशं चा-
　प्याश्चर्यं श्रीनिवासप्रभुवर विबुधोत्तंस ते मोदहेतुः ॥१०॥

किंचैषा देव्या धरायाः प्रसादभूमिः चेटी मल्लिका नाम मन्मुखेन वि-

---

नाक्षरैर्युक्तं यद्वदनं तथा रीतिर्वैदर्भ्यादिस्तया ख्याताम् । पक्षे—सुवर्णमुखरी नदीभेद इति ख्याताम् । आकल्पो वेषः । सदृशो योग्यः । पक्षे—महाकल्पः । 'आमोदो गन्धहर्षयोः' इति । **शान्ते इति** । पुराणागमो जीर्णवृक्षः । पक्षे—भागवतादिः । विटपाः स्थूलशाखाः । पक्षे—विटश्रेष्ठाः । प्रसवं पुष्पम् । पक्षे—प्रसवः पुत्रः । नेत्रं तरुमूलम् । पक्षे—नेत्राणि लोचनानि । चैत्यो ग्रामद्वारि स्थितो वृक्षः । 'चैत्यमायतने बुद्धबिम्बेऽप्युद्देशपादपे' इति रुद्रः । **पाकस्थानमिति** । पाकादयः पञ्च दैत्यभेदाः । कविरसुरगुरुः । अत एव असुरमणीभिर्दैत्यश्रेष्ठैः सात्कृतम् । विबुधोत्तंस देवश्रेष्ठ । इति विरोधः । परिहारस्तु—महानसम् । स्वर्णस्थानम् । चैत्रोत्सवस्थानम् । प्रकृष्टसंतोषस्थानम् । सूरिस्थानम् । उदकस्थानम् । असुरमणी प्राणप्रिया ॥ १० ॥ **किं चेति** । गोष्ठं गोस्था-

ज्ञापयति देवम्—'भवत्संबन्धिनो वैवाहिका यथायोग्यं तत्तत्स्थानेषु स्थापिताः। तथा हि—मेषवृषभादयो गोष्ठे, भर्तृदारिकाकण्ठ एव नक्षत्रमाला, रम्भादयः प्रमदवने, कविबुधकलानिधयः सुधाधौतप्रासादेषु, सौधाग्रे केतुः, मन्दः सभाबहिर्देशे, भुजङ्गावली नरेन्द्रभवने, अन्ये सर्वेऽपि सुमनोगणा बाह्योपवने। अपि च। धनुः शस्त्रशालायां स्थाप्यमुद्याने वा। तारा अङ्गिरसस्य निकटं प्रापणीया चन्द्रस्य वा। देवेन सह गतः सविता वसुदेवो वा सूर्यो वेति वेत्तुमिच्छामि' इति। देवेनाप्यनाकर्णितकेन 'कथय वयस्य मरालक, कदा त्रियामा विरमेत्।

प्रहस्तपीडने योग्यो नूनं कुम्भप्रभाहरः।
कुचाभोगः सरोजाक्ष्या हनुमानिव राजते॥ ११॥
प्रियकामितसौन्दर्यं विलसत्तारकेक्षणम्।
पुनः पश्यामि तद्वक्त्रं चन्द्रबिम्बमिवोल्लसत्॥ १२॥'

इति चिन्तयन्नेव तां निशामनैषीत्। एवं स्थिते 'श्रितकमलवृन्देषु मिलिन्देषु कथंकथमपि प्रियचाटुवचनपरिपाटीनिधुवनस्निग्धासु मुग्धासु, अन्याङ्गनालिङ्गनचिह्नदर्शनकोपसंजातकटुवचनमण्डितासु खण्डितासु,

---

नम्। 'ग्रहभेदे ध्वजे केतुः' इत्यमरः। नरेन्द्रो व्यालग्राही। 'धनुः प्रियालद्रुमराशिभेदयोः शरासने चापि धनुर्धरे च' इति। 'जनकः सविता पिता' इति धनंजयः। **प्रहस्तेति**। प्रकर्षेण हस्ताभ्यां पीडनम्। कुम्भः कलशः, गजमूर्धा वा। पक्षे–द्वावपि राक्षसभेदौ॥ ११॥ **प्रियेति**। प्रियं च कामितसौन्दर्यम्। पक्षे–प्रियको मृगस्तेनामितसौन्दर्यम्। 'प्रियकः पीतशालके। नीपे चित्रमृगे चालौ प्रियङ्गौ कुङ्कुमेऽपि च॥' इति मेदिनी॥ १२॥ **एवं स्थिते इति**। 'अत्री चाटुश्चटुः श्लाघा प्रेम्णा मिथ्याभिशंसनम्' इति। 'परिपाटी तु क्रमः' इत्यमरः। 'सुरतक्रीडां निधुवनमार्याजनमाहुरर्थविदः' इति। 'अकुण्ठितयौवना मुग्धा' इति रसमञ्जरी। 'अन्याङ्गनासुरतोपभोगचिह्नितः प्रातरा-

उषःसंचारिजनसंदर्शनचकिततारकास्वभिसारिकासु, कामिमिथुनमनोरथप्रहरणायुधेषु, कूजच्चरणायुधेषु, आप्रातःकालपरिपालनजागरूकश्वशुरदन्तधावमानसमयकृतनिधुवनेषु पांसुलजनेषु, भक्ष्यभ्रमोत्प्लवमानशेषाचलवानरेष्विव खण्डितद्विजवसनेषु, महाराष्ट्रसैनिकेष्विवाकुलीकृतकुन्तलेषु, बालपचितकुसुमेष्विव नखाङ्कितवृन्तेषु, अपुरोभागस्थितमन्त्रिजनसंलापपरदशवदनवदनेष्विव पश्चात्प्रापितकण्ठमालेषु, ग्राम्यजनपालितशुकेष्विव किंचिन्मलिनपत्रेषु, वहुव्यापारव्यग्रवणिग्जनेष्विवाक्रमवेष्टितनीवीषु, मखभङ्गकुपितेन्द्रेष्विव मुक्तपयोधरबन्धेषु, नलकूबरेष्विव दन्तदष्टरम्भोरुषु, नमुचिशूलाघातदूनगजेन्द्रेष्विवायस्तकटेषु, निर्मुक्तेष्विव मुक्तकञ्चुकेषु, कौस्तुभेष्विव मनोज्ञमणितोल्लसितेषु, वेनेष्विव गलिताङ्गरागेषु, अप्रगल्भकाव्येष्विव विभ्रष्टालंकारेषु तरुणीजनेषु, वारुणीमनोविलासेष्विवानुभूयमानशेषसुरतसुखेषु जाते जगन्मङ्गले प्रभातसमये कस्मिंश्चिद्राजमन्त्रिणि समागत्य कृतमङ्गलस्नानेन देवेन भवितव्यम् । अयमयं त्वरयति देवः कल्याणमण्डपिकाप्रवेशाय वियन्महीपालः सूर्यश्च' इति वदति श्रीनिवासस्तु तथा कृत्वा स्वयमेवागत्य राज्ञाकारितः सभां प्रविवेश ।

---

गच्छति यस्याः पतिः सा खण्डिता' इति । 'कान्तार्थिनी तु या याति संकेतं साभिसारिका' इत्यमरः । 'कुक्कुटश्चरणायुधः' इत्यमरः । अप्रकटितपुरुषानुरागा परकीया । द्विजवसनमधरः । पक्षे—ब्राह्मणवसनम् । कुन्तलाः अलकाः, देशभेदश्च । वृन्तं कुचाग्रं प्रसवबन्धनं च । कण्ठमाला मुक्ताहारो गलपङ्क्तिश्च । पत्रं मकरीपत्रम् । नीवी कटिवस्त्रं मूलधनं च । कटः कटी गजगण्डश्च । निर्मुक्तो मुक्तकञ्चुकः सर्पः । कञ्चुकः कुचबन्धनम् । पक्षे—सर्पत्वग्विशेषः । मणितं रतिकूजितम् । पक्षे—मणिता रत्नत्वम् । अङ्गरागो लेपनद्रव्यम् । पक्षे—वेनः अङ्गपुत्रः । कश्चन राजाङ्गस्तत्पुत्रस्तद्वेषीति पुराणम् । वारुणी शेषभार्या । 'शेषः संकर्षणेऽनन्ते उप-

तत्र तु वैवाहिकानां परस्परं परिहासपेशला वाचः प्रसरन्ति स्म। तथा हि—कन्यापक्षगाः स्त्रियः 'भुजङ्गादत्तमानसे वारुणि, कुङ्कुमेन सत्कुरु भालम्। पितामहाश्लेषरसिके सरस्वति, हरिद्रया लिम्प कुचकुम्भौ। चण्डि पार्वति, पुरतो भव। गुरुहृद्यपयोधरे तारे, स्वीकुरु वीटिकाम्। तापसहितालिङ्गनेऽरुन्धति, आसन उपविश' इति। तथा च। वरपक्षगा वनिताः—

'पीडितः स्तनभारेण तव पीनपयोधरे।
धरे वियन्महीपालः सिद्धार्थो भूभृदप्यभूत्॥ १३॥'

कांचन प्रति—सुप्रलम्बस्तनि, इत एहि। मातङ्गगामिनि, किं ब्रूहि। दोषाकरमुखि, क स्थेयम्। अधरलसद्रागे, श्रान्तासि' इति।

अथ तस्मिन्व्यतिकरे—

त्र्यन्तैर्यदवर्णि यच्च विबुधैराश्लाघि यत्तापसै-
राध्यायि व्रजवल्लभीभिरनिशं चाश्लेषि यत्संभ्रमात्।
यच्चालम्बि समुद्रराजसुतयाप्याराधि मद्दैशिकै-
स्तच्चाक्षालि पदं वियन्नृपतिना कन्याप्रदानोत्सवे॥ १४॥

किं च—

अङ्गुष्ठस्य दशाननो नखमणेर्ब्रह्माण्डभाण्डं क्षितिः
स्पर्शस्य प्रणतेः कयाधुतनयः संकुट्टनस्योरगः।

---

वक्तेतरेऽन्यवत्' इति। 'देवो मेघे सुरे राज्ञि' इति। **कन्यापक्षगा इति**। तापेन सहितमालिङ्गनं यस्या इति परिहासः। तापसो वसिष्ठ इति तत्परिहारः। **वरपक्षगा इति**। 'सिद्धार्थौ बुधसर्षपौ' इति। भूभृत्पर्वतः। प्रलम्बो हारभेदः। अधरो नीचः। **अथेति**। 'संपर्के च व्यतिकरः प्रकारव्रातयोरपि' इति। **त्र्यन्तैरिति**। त्र्यन्ता वेदान्ताः। मद्दैशिका आकण्ठकण्ठीरवाचार्याः॥ १४॥ **अङ्गुष्ठस्येति**। कदाचिद्रामावतारे रावणः पाताललोकं प्राप्तो भगवता पदाङ्गु-

यात्रायाः पितरो द्युलोकतटिनीपांसोर्महत्त्वं विदु-
र्यस्य श्रीचरणस्य तं नृपवरः प्रक्षाल्य धन्योऽभवत् ॥१५॥

अत्रान्तरे तत्कालयोग्यगीतिकां पपाठ तदुचितो जनः । तथा हि—

'याः प्रोक्ताः सुरपारिजातहरणे या भूमिजोन्मूलने
याः कंसस्य निबर्हणे कुवलयापीडस्य याः संहृतौ ।
ताभिः संप्रति नूतनेतरगिरां श्रेणीभिराशास्महे
कल्याणं कमनीयनीरजदृशोः पद्मावतीकृष्णयोः ॥ १६ ॥

क्रोडस्थित्यतिसुन्दरः सर इव स्वैरं शचीवत्पुन-
र्यो हर्यक्षगदापनोदनपटुर्विश्वंभरानन्ददः ।
लक्ष्मीवत्क्षितिपालशौरिसुतयोः पाणिग्रहे मङ्गलं
दद्यात्पन्नगराजशैलवसतिः क्रोडावतारो हरिः ॥ १७ ॥

तिर्यक्तिर्यगपाङ्गपङ्क्तिवलनव्याजत्रपामिश्रित-
स्मेरास्यद्युतिसूचितस्मरकृता वेगातिरेकक्रमा ।
सानन्दा हृदि साभ्यसूयकवचोलीकप्रकोपा बहिः
पार्श्वस्था कमला विवाहसमये दद्याच्चिरं मङ्गलम् ॥ १८ ॥

---

ष्टेन बहुदूरं पातित इति पुराणम् । कृष्णावतारे यत्पादाङ्कितत्वाद्भूः स्वर्गाधिका जातेति श्रीभागवतम् । कयाधुतनयः प्रह्लादः । उरगः कालियः । गयाक्षेत्रे विष्णुपादे पिण्डदानेन पितृणामुद्धार इति शास्त्रम् ॥ १५ ॥ **याः प्रोक्ता इति ।** भूमिजो नरकासुरः । नूतनेतरगिरो वेदाः ॥ १६ ॥ **क्रोडेति ।** क्रोडो वराहः । पक्षे—क्रोडं भुजान्तरम् । हर्यक्षस्य हिरण्याक्षस्य गदायुधम् । पक्षे—हरेरिन्द्रस्याक्षाणीन्द्रियाणि तस्य गदो रोगः । विश्वंभरा भूदेवी । पक्षे—पुमान्नारायणः । 'गदो भ्रातरि विष्णोश्चाप्यामये नायुधे गदा' इति सुधा । 'विश्वंभरोऽच्युते शक्रे पुंसि

लेखालीभिरलंकृतो विधिरिव प्रेङ्खत्प्रवालद्युति-
वर्णीहस्त इवातिपल्लवकुलप्रेष्ठश्च गाणिक्यवत्।
पद्मोल्लासकरस्तथा हरिरिव श्रीश्रीनिवासप्रभोः
पादः कृष्णवियन्नृपालसुतयोः कुर्यान्महन्मङ्गलम् ॥१९॥'

इति। अथ संप्राप्ते मुहूर्ते 'सावधानेन स्थेयम्' इति भणति पुरोधोद्वये, वादयति घण्टां ग्रामगणके, वाद्यमानेषु तुर्येषु, गायन्तीषु तद्देशभाषाकुशलासु चिरण्टीषु, पठत्सु विविधमन्त्रान्ब्राह्मणेषु, आकाशभूपेऽपि आनन्दामृतसरोमज्जन्मानसे, पद्मावती देवी स्वाञ्जलिकलिततन्दुलाञ्श्रीनिवासस्य मौलावाक्षिपत्। देवोऽपि तस्याः।

अत्रान्तरे राजपुत्र्याः सखी मदनकलिका धरामवोचत्—'देवि, पश्य पश्य।

नानारत्नमया इवाब्जभवया श्रीवज्ररेखान्विताः
किं चैते प्रमदाश्रुनीरमिलिताः सच्चन्द्रकान्ताः पुनः।
लक्ष्मीनायकमस्तकेऽम्बरमणीरत्नेडितास्तन्दुला
मुक्तास्ते तु करप्रवालललिता हृत्पद्मरागान्विताः ॥२०॥'

---

विश्वंभरा भुवि' इति ॥ १७ ॥ १८ ॥ **लेखेति**। लेखा रेखाः। पक्षे—देवाः। विधिर्ब्रह्मा। प्रवालो विद्रुमः। पक्षे—वीणादण्डः। पल्लवः किसलयः। पक्षे—विटः। गणिकानां समूहो गाणिक्यम्। पद्मम्। पक्षे—पद्मा ॥ १९ ॥ 'चिरण्टी तु सुवासिनी' इत्यमरः। **नानेति**। वज्रं रत्नभेदः। रेखा राजिः। नीलं रत्नयोरभेदादिन्द्रनीलमणिः। चन्द्रकान्तो मणिः। अम्बरमणीरत्नं सूर्यकान्तमणिः। मणीशब्दः। मुक्ता मौक्तिकानि। प्रवालो विद्रुमः। पद्मरागो रत्नभेदः। इति नानारत्नमयत्वोपपादनप्रकारः। तत्त्वार्थस्तु—वज्ररूपा रेखा लक्षणव्यञ्जकपदार्थः करतलस्थः। नीरं जलम्। चन्द्रवत्कान्ताः। हे अम्बेति संबोधनम्। रमणीरत्नैरीडिताः स्तुताः। मुक्तास्त्यक्ताः। प्रवालः किसलयः। हृदयकमलप्रेमान्विताः

ततः प्रथमं देवो देवीमवलोकयत् । यस्या वदनमिव कुवलयलोभनीयं नयनयुगलम्, नयनयुगलवदब्जसुन्दरं वदनम् । कुचयुगीव घनघटाकारमञ्जुला कुन्तलाली, कुन्तलालीव सारङ्गत्रपादायिनी कुचयुगली ।

किं च कटाक्षः सुतीक्ष्णोऽपि कृष्णः, कुचभारः पर्वतस्वरूपोऽपि गुरुः ।

अपि च मौलिर्वक्रकचोद्भासितः, कटाक्षो नवक्रकचोद्भासितः । कैश्यं रविन्दसुन्दरम्, नयनमरविन्दसुन्दरम् । खशोभितो मध्यभागः, नखशोभितः पाणिः । वसुधासदृशं जघनम्, नवसुधासदृशोऽधररसः । वदरसंनिभं वदनम्, नवदरसंनिभं कण्ठस्थलम् । मन्दो मुग्धभावः, अशनिर्वियोगः ।

अनन्तरं सापि तमपश्यत् । यश्चाकारेण प्रतापेन च स्मरविद्वेषी । यस्य च वदने राष्ट्रे च द्विजा मुक्तोपमाः । यस्य च वाहनं मुखं च द्विजराजः । यस्य चामीकरोज्ज्वला गजा उपस्कराश्च । यस्मिन्रक्षति क्षितिं चित्रभित्तिश्चन्द्रशालासु, बन्धदर्शनं विदग्धमुखमण्डने, पयोधरोच्छेदः शरदि ।

---

॥ २० ॥ **देवो देवीमिति** । कुवलयं भूमण्डलम् । घनघटा मेघसमूहः । पक्षे—अविरलकुम्भौ । **किं चेति** । द्वावपि ऋषिभेदौ इति विरोधः । कटाक्षस्य तीक्ष्णत्वं नीलत्वं च कविसमयप्रसिद्धम् । पर्वत ऋषिभेदो नारदमित्रम् । गुरुर्बृहस्पतिरिति विरोधः । **अपि चेति** । नूतनकरपत्रम् । 'रविन्दमन्धकारः' इति पदरत्नावली । खमाकाशम् । वदरश्चन्द्रः । 'वदरो मानसिन्धुः शशिनस्तु त्रिनामकं यो वेद मुच्यते रोगैः' इति भगवान्भाष्यकारः । नवदरो नूतनशङ्खः । मन्दोऽल्पः । अनेन मध्यत्वमुक्तम् । अशनिर्दम्भोलिः । दुःसह इति भावः । इति तत्त्वार्थः । **सापीति** । मदनसमानः, पक्षे—सूर्यसमानः । चेति, अमी इति पदविभागः । करः शुण्डा । पक्षे—चामीकरं सुवर्णम् । **यस्मिन्निति** । परिसंख्या-

किं च प्रसूनानुरक्ता भृङ्गाः, न गजाः। अमानोनोल्लसिताः सुहृदः, न वाचः। विप्रसवोल्लसिता दशाः, न स्त्रियः। मत्कुणभूषिता गजशालाः, न कुड्याः। अस्त्वेतत्।

शश्वद्यः सुरसोर्मिकः कमलिनीवर्गं न विस्मापये-
त्तत्पाणिश्च तदीक्षणव्यतिकरो रागानुबन्धोज्ज्वलः।
स्वीचक्रे कमलापतिस्तदुभयं पूर्वं बबन्ध स्वयं
कामार्तः किल साहसादिव गले माङ्गल्यसूत्रं ततः॥२१॥

ततश्चातिक्रान्ते लाजहोमविधौ वियद्भूपालः सादरं श्रीनिवासमजीगदत्—

'आशेषाचलमासमुद्रममर क्ष्मां पाल्याद्राविडं
क्षोणीशाश्वरथेभपत्तिवसुमद्राज्यं सकोशायुधम्।
अन्यत्किंचिदपि प्रदेयमवनौ देहश्च ये बान्धवाः
सर्वं तेऽद्य समर्पितं तदधुना त्वन्मुद्रया मुद्र्यताम्॥ २२॥

किं च वराहदेवो नागतः, प्रायेण भूदारतया मयि साभ्यसूय इति भाति।

अथ चागतेषु यथाविभवं यथोचितं सर्वेऽपि संमानिताः। शेषाय

---

लंकारः। 'भित्तिः कुड्ये च भेदे च' इति। बन्धः काव्यादिषु प्रसिद्धश्छत्रपद्मादिः। विदग्धमुखमण्डनं ग्रन्थः। **किं चेति**। सूनो हिंसा। मानेनोना नेत्यमानो ना उल्लसिताश्चेति कर्मधारयः। पक्षे—अमानोनाः प्रतिषेधे। विप्राणां सवो यज्ञः। पक्षे—प्रसवो गर्भमोचनम्। 'मत्कुणः खट्वाकीटे निर्विषाणगजे विश्मश्रुपुरुषे' इति। **शश्वदिति**। शश्वत्सदा। 'शब्दार्थे पुनरर्थे च सदार्थे शश्वदुच्यते' इति। 'शश्वद्दाता सुखं वस' इति प्रयोगश्च। सुरसा शोभनप्रीतिः। ऊर्मिलाङ्गुलीयकं यस्मिन्। पक्षे—शोभनश्रृङ्गाररसतरङ्गः। कमलिनी पद्मिनी। न विस्मापयेदिति काकुः। विस्मापयेदेव। पक्षे—कं अलिनीनां भृङ्गीणां वर्गं न विस्मापयेदिति काकुः॥ २१॥ २२॥ **अथेति**। कञ्चुकः कवच इति तत्त्वार्थः। सर्पत्वग्विशेष

कञ्चुकः, इन्द्राय चामरश्रीः, चन्द्राय नक्षत्रमाला दत्ता । अन्येऽपि च देवाः सुमनसो जाताः । परं केनचिज्जातिहीन इत्युक्तत्वाद्वसन्तोऽसुमना आसीत् । शेषो दीर्घपृष्ठ इत्युक्तत्वादहितोल्लसितोऽभूत् । बहुभक्षणाद्वैश्वानरः सहेतिर्जातः । तत्र मम को वापराधः ।

अपि च देवस्य पुत्री गङ्गा नलिनी वा मालती वा न संदेहो गतः ।

अन्यच्च किंचित्कालमत्र स्थितेन भवितव्यम्' इति ।

तच्छ्रुत्वा देवोऽपि कंचित्स्मेरवदनः प्राह—'आर्य, मनसात्रैवैनं स्थितं जानातु भवानधुना त्वमनुजानातु वराहदेवाभिवन्दनाय यामि शेषाचलम्' इत्युक्त्वा च कथंकथमप्यभिनवकन्याविरहदूनौ धरावियद्भूपालौ सान्त्वय्य सपरिवारस्तेनाज्ञप्तः पद्मावत्या सह निर्गत्यागस्त्याश्रममासाद्य गरुडवर्जं सर्वानमरगणाननुज्ञाप्य फणीन्द्राचलमगमत्क्रमेण ।

तावुभौ श्लाघ्यसुरतौ सततं प्रमदोज्ज्वलौ ।
श्यामौ पद्मावतीकृष्णौ रेमाते पन्नगाचले ॥ २३ ॥
श्रीनिवासोऽन्यविद्वद्भ्योऽलंकारान्कटकादिकान् ।
कवये वेङ्कटेशाय श्लेषमेव हि दत्तवान् ॥ २४ ॥
सत्कविना येन यथा परुषाक्षरमित्रभावहृद्येन ।
जनता सुखिता सततं वेङ्कटभूपालचन्द्रेण ॥ २५ ॥

---

इति च । चामरा राजचिह्नव्यञ्जकाः । पक्षे—अमरा देवाः । सुमना मालती जातिः' इति । 'दीर्घपृष्ठो दन्दशूको बिलेशयः' इत्यमरः । अहिता सर्पत्वम् । हेतिर्ज्वाला । पक्षे—ईतिः पीडा । जातिपद्मपुष्पयोर्भेदाद्विरोधः । द्वितयमपि तन्नामेति परिहारः । गरुडस्य सत्त्वे सर्पाचलभयाभाव इत्यतः 'गरुडवर्जम्' इत्युक्तम् । **तावुभाविति** । सुरतं निधुवनम् । पक्षे—सुरता देवत्वम् ॥ २३ ॥ **श्रीनिवास इति** । श्लेषमलंकारभेदम् ॥ २४ ॥ **सत्कविनेति** । अपरुषा कोपरहितेन । अक्षरमित्र-

गुरुगुरुकृपयायं दुष्करं स्तोकलोकैः
प्रकटितनिजकीर्तिः सादरं वेङ्कटेशः ।
चिरसमयहृदिस्थं पूरयन्काव्यमेत-
त्कविरिव च तदिष्टं श्रीनिवासः कृतार्थः ॥ २६ ॥

इति श्रीमच्छ्लेषकाव्यपारावारगमननौकायमानचरणाभिवन्दन-नृकण्ठीरवाचार्यसूरिहीरान्तेवास्यन्यतमस्याक्लिष्टश्लिष्टरचनापटोः स्वकीर्तिकदम्बधवलितदिग्भित्तिवेङ्कटगिरिनिवासिवेङ्कटक्ष्मापालयुगलाश्रितस्याप्रयासापादितसाहित्यकलस्य कविमशकशिशोर्देशिकचरणसरसीरुहसमर्पितनिजसुकृतस्य वेङ्कटेशस्य कृतिषु पूर्वश्रीनिवासविलासो नाम श्लेषोत्तरकाव्यबन्धः पर्याप्तः । पञ्चम उच्छ्वासोऽयम् ।

पूर्वार्धः समाप्तः ।

---

भावो नाशरहितसुहृद्भावः । पक्षे—अनुप्रवर्णशय्या(?) संदर्भः ॥ २५ ॥ **गुर्विति ।** स्तोकलोका अल्पजनाः ॥ २६ ॥ **इतीति । श्रीमदिति ।** नृकण्ठीरव आचार्यः कवेर्गुरुः । अन्यतमो यः कश्चित् । वेङ्कटगिरिः शेषाचलो ग्रामभेदश्च । वेङ्कटक्ष्मापालः श्रीनिवासः देशमुखवेङ्कटरायश्चेति युगलम् । कविमशकशिशुरिति स्वाहंकारखण्डनोक्तिः । पूर्वश्रीनिवासविलास इत्यनेन 'उत्तरश्रीनिवासविलासोऽप्यस्ति' इत्युक्तं भवति ॥

इति श्रीधरणीधरभूपविरचिता पूर्वश्रीनिवासविलासव्याख्या पर्याप्ता ।

---

## उत्तरभागः ।

### प्रथमोल्लासः ।

छत्री यस्त्वचलेन गोपरमणीवक्षोरुहैः कन्दुकी
  यो वै कालियनागनायकफणाभोगेन रङ्गी च यः ।
देवैः किंकरिणेऽब्धिना भवनिने नागेन पर्यङ्किणे
  कालेनायुधिनेऽण्डजेन रथिने देवाय तस्मै नमः ॥ १ ॥

सर्वत्र सुमनोवृन्दे रससौरभ्यशालिनि ।
पद्मं नृसिंहसूरिश्च ममामोदाय कल्पते ॥ २ ॥

अथ कदाचित्स्वामिसरसो नातिदूरे कस्मिंश्चिल्लतामण्डपे श्रीमत्या पद्मावत्या सह विहरति तत्रभवति श्रीनिवासे, 'देव, इतः किंचित्प्रसरतु दृष्टिः । प्रणमत्ययमत्र विपुलकटकोन्नतिर्गाधिराजः अत्र नगाधिराजश्च भूभृत् । अत्रायं महाप्रतापशाली नलः, अत्रायमनलो देवः । अत्रायम-

---

उत्तरविलासः प्रारम्भः ।

**छत्रीति** । अचलो गोवर्धनगिरिः, तेन छत्रवान् । रङ्गो नर्तनस्थानम् । नागः शेषः । कालो दुर्गा देवी । आयुधं सुदर्शनाख्यं यस्य । 'करालोलं चक्रं कालः' इति यमकभारतम् । 'कालः कालनाम्नी दुर्गा' इति यदुपतिटीकायाम् । यद्वा— कालः कालचक्रम् । 'कृष्णस्यैतन्न चित्रं क्षितिभरहरणं कालचक्रायुधस्य' इति श्रीभागवतम् ॥ १ ॥ **सर्वत्रेति** । सुमनसः पुष्पाणि भूदेवाश्च । रसो द्रवः । मकरन्द इति यावत् । नवरसः प्रेम वा । सौरभ्यं परिमलः पक्षे—चारुत्वम् । ताभ्यां शालि शोभमानम् । 'चारुत्वमपि सौरभ्यम्' इति रत्नमाला । 'शृङ्गारादौ विषे वीर्ये गुणे रागे द्रवे रसः' इत्यमरवैजयन्त्यौ । 'आमोदो गन्धहर्षयोः' इति सुधा ॥ २ ॥ तत्रभवान्पूज्यः । 'देवेतः किंचित्प्रसरतु दृष्टिः' इत्यस्य 'इति निवेदयति वेत्रपाणौ' इत्यग्रे वक्ष्यमाणेनान्वयः । गाधिः राजभेदः । नगमधिराजो हिमवान् । 'सैन्ये च कटकोऽस्त्रियाम्' इति पद्दरत्नावली । पक्षे—'कटकोऽस्त्री नि-

गदः पुरंदरः, नागदो गरुडः । अयं भोगह्वयो वासुकिः, नभोगह्वः सूर्यः । त्रिनयनसमुद्भवः स्कन्दः, अत्रिनयनसमुद्भवश्चन्द्रः । सत्रिनन्दन ऋष्यशृङ्गः, अत्रिनन्दनो दुर्वासाश्च' इति निवेदयति वेत्रपाणौ 'तालललितेऽतिवर्धितरागे शंकराभरणमिलिते चित्ररथगाने भव दत्तावधानः' इति संप्राप्तहरितत्वे ऋषिरूपे, तथैव 'तादृशे पद्मावतीस्तनद्वन्द्वे च' इति पक्षिरूपे भणति शुके, 'सूर्यनन्दनत्वान्मन्दः' इति च्छायापुत्रं 'नतापकारित्वात्कलङ्की' इति चन्द्रं 'सहेतित्वात्कृशानुभावमावदति' इत्यभिमपहसत्सु विदूषकेषु, उद्यानद्वारपः सविनयं व्यजिज्ञपत्— 'देव, द्वौ भूदेवावागतौ देवं द्रष्टुमिच्छतः ।'

**श्रीनिवासः**—शीघ्रं प्रवेशय ।

ततस्तावागत्य यथाविधि कृतोपचारावुपविशतः स्मः ।

**प्रथमः**—

शङ्खचक्राब्जकरयोर्यात्रात्रासितहंसयोः ।
लसत्पयोधरद्युत्योर्दम्पत्योर्भद्रमस्तु वाम् ॥ ३ ॥

---

तम्बोऽद्रेः' इत्यमरः । 'देवो मेघे सुरे राज्ञि' इति सुधा । अगं पर्वतं द्यति खण्डयतीत्यगदः, नागदः सर्पखण्डकः । भोगः फणा । नभसि गच्छन्तीति नभोगाः । चन्द्रोऽत्रिनेत्रादुत्पन्न इत्यार्याः । 'नयनसमुदितं ज्योतिरत्रेः' इति जगद्धरः । सत्रिणो यज्वानः । नन्दको हृषैकः । तालललितेत्यादिविशेषणत्रयं गानस्य स्तनस्य चेति बोध्यम् । तालः कालक्रियामानम् । पक्षे—वृक्षभेदस्तेन तत्फलं ग्राह्यम् । रागो भैरवादिः पक्षे—अनुरागः । शंकराभरणं रागभेदः । पक्षे—सुखकरालंकारः । 'शुकः स्याद्रक्षसि मुनौ कीरे' इति रत्नमाला । हरेर्नारायणस्य तत्त्वमनारोपितत्वं विष्णुस्वरूपमिति यावत् । पक्षे हरिद्वर्णत्वम् । सूर्येत्यादिवाक्यत्रये हास्यरसो ज्ञेयः । सूरीणां ज्ञानिनां अनन्दनत्वान्मन्दो निर्भाग्यः इति हास्यम् । तत्त्वार्थस्तु—सूर्यपुत्रत्वाच्छनिरिति । एवमग्रेऽपि । नतानामपकारी । कलङ्की अपवादयुक्तः । पक्षे—तापकारी न, चिह्नवान् । ईतिः पीडा तया सहितः सहेतिः; कृशानुभावं अल्पसामर्थ्यम् । पक्षे—हेतिर्ज्वाला, कृशानुरग्निरिति । शङ्खेति ।

**द्वितीयः—**

कलापैः कलापी च तार्क्ष्येण तार्क्ष्यी लसन्मौलिकोद्दामहारेण हारी।
रमाकाश्यपीचार्वपाङ्गैरपाङ्गी स देवोऽस्तु मद्वाचि दत्तावधानः ॥४॥

**श्रीनिवासः**—निर्वृता वयमाशीर्भ्याम् ।

**प्रथमः**—भवद्वेषिणश्च ।

**द्वितीयः**—सदाश्लेषविचक्षणो भवानिति द्रष्टुमुत्कण्ठितं नश्चेतः ।

तच्छ्रुत्वा साहित्यसारमञ्जूषा कमलिनी प्राह—'न केवलं वचसामेव, किं तु वनितानामपि ।'

**श्रीनिवासः**—बहुवचनेनालं कुप्येद्देवी ।

**कमलिनी**[1]—देव, कुपिता कुलजा कान्ता तप्तकनकमालिकेव कोपागमेऽधिकां रुचिं वहति ।

---

वां युवयोः । शङ्खानां वलयानां चक्रं समूहस्तद्युक्तः अब्जकरो यस्या इत्याद्यपक्षे । 'शङ्खो ललाटास्थनि च वलये चास्त्रियाम्' इति । पक्षे-स्पष्टम् । यात्रा गमनम् । पक्षे-दिग्विजयार्थं गमनम् । हंसो दैत्यभेदः । 'स्त्रीस्तनाब्दौ पयोधरौ' इत्यमरः ॥ ३ ॥ **कलापैरिति** । बर्हैर्बर्हवानिति चमत्कारार्थः । भूषणवानिति तत्त्वार्थः । अग्रेऽप्येवमेव । 'कलापो भूषणे बर्हे' इत्यमरः । तार्क्ष्योऽस्यास्तीति तार्क्ष्यी गरुडवान् । पक्षे-तुरङ्गी । 'तुरङ्गगरुडौ तार्क्ष्यौ' इत्यमरः । हारी हारवान् । पक्षे-मनोहरः । 'वक्षोजौ तव हारिणौ' इति चन्द्रालोके । अपगतमङ्गं शरीरं यस्य सोऽपाङ्गो मदनः । तद्वान् । कामीत्यर्थः । काश्यपी क्षितिः ॥ ४ ॥ 'सुखनाशौ तु निर्वृती' इति । 'आशीरुरगदंष्ट्रायां शुभवागभिलाषयोः' इति । श्लेषोऽलंकारभेदो वचःपक्षे । वनितापक्षे तु-आश्लेष आलिङ्गनम् । **कुपितेति** । रुचिमभिलाषं कान्तिं च । 'अभिष्वङ्गे स्पृहायां च गभस्तौ च रुचिः स्त्रियाम्' इत्यमरः । 'यत्काञ्ची काशी च युगपद्वर्णिता' इति वक्ष्यमाणत्वात्

---

१. 'कमलिनी' इत्यस्य पूर्ववाक्यान्वितत्वं परिकल्प्य 'प्रथमः—' इत्यपि वर्धितं क्वचित्.

**श्रीनिवासः**—क्व स्थितिर्युवयोः ।

**द्वावपि भणतः**—

'नदी वेगवती दिव्या नागाचलविभूषणम् ।
देवं स्यात्तारकानन्दो यत्र सा नः पुरी प्रभो ॥ ५ ॥'

**श्रीनिवासः**—तत्र [1]कीदृग्राजा ।

**द्वावपि**—

अहीनगुणभृद्भाति नरानुग्रह[2]कारकः ।
गजदानधुरीणश्च तत्रत्यो राजशेखरः ॥ ६ ॥

**श्रीनिवासः**—प्रजा च कीदृशी ।

**द्वावपि**—

उज्जृम्भन्मालती मौलौ भोगिभोगाः करे स्थिताः ।
उत्तंसे चाब्जकलिका यत्र संस्थितिशालिनाम् ॥ ७ ॥

---

'नदी–' इत्यादिश्लोकत्रयमुभयपरमिति ज्ञेयम् । तथाह्यर्थः—यत्र काञ्च्याम् । वेगवत्यभिधाना नदी दिव्येति भक्तिवादः । नागाचलो हस्तिगिरिस्तस्य भूषणस्थानीयम् । देवं वरदराजः । तारका कनीनिका । चक्षुरानन्दजननी काञ्चीति भावः । सा पुरी काञ्ची नोऽस्माकमिति एकस्याभिप्रायः । यत्र काश्यां वेगवती दिव्या नदी अमर्त्यतरङ्गिणी भागीरथी । वर्तत इति शेषः । नागाः सर्पा एवाचञ्चलालंकारो यस्य स विश्वनाथः । सततधारणयोग्यत्वात्सर्पालंकारस्याचलत्वं न तु जडत्वेन । तारकमन्त्रोपदेशेनानन्दः । सा पुरी काशी । द्वितीयस्याभिसंधिः । इत्यत्र 'द्वावपि भणतः' इत्युक्तम् ॥ ५ ॥ राजशेखरो भूपश्रेष्ठः । गजदानं करिवितरणम् । अन्यत्स्पष्टम् । इति काञ्चीपक्षे । पक्षे–चन्द्रचूडः । अहीनां सर्पाणामिनः श्रेष्ठः शेषः स एव गुणो मौर्वी तं बिभर्तीति तथोक्तः । नरोऽर्जुनः । गजदानं गजासुरखण्डनम् । 'इनः सूर्ये प्रभावपि' इति ॥ ६ ॥ यत्र काञ्च्याम् । संस्थितिर्वासः । उज्जृम्भन्ती जृम्भणोन्मुखी । मालती जातिपुष्पम् । सर्वे श्रङ्गा-

---

१. 'कीदृशो' ख. २. 'कातरः' ख.

**कमलिनी**—(सस्मितम् ।) अहो चतुरता कवितायाः । यत्काञ्ची काशी च युगपद्वर्णिता ।

अत्रान्तरे कंचन भृङ्गं सितसरोजमलंकुर्वाणं दृष्ट्वा श्रीनिवासः प्राह—

नदन्किं वक्ति सारङ्गः पुण्डरीकसमीपगः ।

इति । तच्छ्रुत्वा द्वयोरेकः[1]—देव,

निकटस्थेऽभयोऽस्म्यद्य सारङ्गवरदे त्वयि ॥ ८ ॥

**द्वितीयः**—

वरदस्तद्युगलयोः श्रीनिवास भवानिति ।

**कमलिनी**—

केशैरास्येन च हृता श्रिया ते संपदावयोः ॥ ९ ॥

---

रिण इति भावः । पक्षे—यत्र काश्याम् । संस्थितिर्मरणम् । मालती गङ्गा । काश्यां मृतानां शिवसारूप्यमिति काशीखण्डे । 'मालती च मलापहा । विष्णुपादाब्जसंभूता गङ्गा' इति पुराणम् । 'उत् प्रकाशे वियोगे च' इति । भोगिनां धनिनां भोगाः सुखानि । 'भोगो धने [सुखे] पुंसि' इति सुधा । करे स्थिता इति लोकोक्तिः । स्वाधीना इति भावः । पक्षे—सर्पाणां फणाः । अब्जकलिका पद्मकोरकः । पक्षे—चान्द्रक्षारकम् । 'चूडोत्तंसितचन्द्रचारुकलिका' इति प्राचीनप्रयोगः ॥ ७ ॥ **नदन्निति** । 'सितसरोजं, भृङ्गः' इति श्रीनिवासाभिप्रायं निगूह्य, एकः कविः 'व्याघ्रः, कुरङ्गः' इत्यर्थं परिकल्प्योत्तरं वक्ति—**निकटस्थ इति** । त्वयि निकटस्थे समीपवर्तिनि सति अहमभयोऽस्मीति । वच्मीति शेषः । तत्र हेतुगर्भविशेषणमाह—**सारङ्गेति** । कुरङ्गवरद इति चमत्कारः । गजेन्द्रवरद इति तत्त्वार्थः । 'सारङ्गश्चातके भृङ्गे कुरङ्गे च मतङ्गजे' इत्यभिधानमाला । 'व्याघ्रेऽपि पुण्डरीको ना' इत्यमरः ॥ ८ ॥ 'सारङ्गो गजेन्द्रः, पुण्डरीकः ऋषिभेदः' इति पूर्वार्धमभिप्रेत्य द्वितीयः कविरुत्तरं वक्ति—**वरद इति** । तद्युगलयोर्गजेन्द्रपुण्डरीकयोः । गजेन्द्रवरदः पुण्डरीकवरदश्च भवानिति [भावः] । श्रीनिवासाभिप्रायानुसारेण कमलिनी वक्ति—**केशैरिति** । अर्थः स्पष्टः ॥ ९ ॥

---

१. 'द्वयोर्मध्ये एकः' ख.

आकर्ण्य च दरदलितसितसरोजदामोद्दामगर्वसर्वंकषेण कटाक्षकलापेन नन्दिततद्वाचि देवे, प्रसन्नमनसं विदित्वा प्रथमः—

हस्तश्चापं त्यजति वहतो लोचने जीवनाशां
चित्रं चेतस्त्यजति रसना वाञ्छति त्वद्रिपूणाम् ।
हंहो गां च त्यजति वदनं स्वीकरोत्युत्तमाङ्गं
युद्धे जातो[1] गुणविनिमयः श्रीनिवासक्षितीन्द्र ॥ १० ॥

द्वितीयः—

विज्यश्च चापवदये रथवद्विचक्रो
बाणालिवद्व्रजति हन्त विलक्षभावम् ।
स्वस्यैव सौख्यततिवच्चपलायमानः
श्रीश्रीनिवास नृपचन्द्र तवारिवर्गः ॥ ११ ॥

पुनः प्रथमः—

नेत्रयोः शरजालानि कीर्त्या चापश्रियं वहन् ।
ज्याकर्षणपरः शत्रुर्दृष्टः श्रीवेङ्कटप्रभोः[2] ॥ १२ ॥

---

**हस्त इति ।** गुणविनिमयो व्यत्यासः । हस्तस्य शरासनत्यागः, लोचनयोः शरासनवहनमिति गुणव्यत्यासोपपादनप्रकारः । अतश्चित्रमित्युक्तम् । तत्त्वार्थस्तु—चेति भिन्नं पदम् । अपां समूह आपम् । युद्धे तव रिपुः शरासनं त्यक्त्वा रुदतीति भावः । 'कारुण्यापं त्रिदशपरिषत्कालमेघम्' इति भोजभूपप्रयोगः । एवमग्रेऽपि जीवनाशां प्राणेच्छाम् । पक्षे—जलाशाम् । गां वचनम् । पक्षे—भूमिम् । उत्तमाङ्गं शिरः ॥ १० ॥ ज्या क्षितिरिति अरिवर्गपक्षे । चापपक्षे तु—मौर्वी । एवमग्रेऽपि । चक्रं सैन्यम् । पक्षे—रथाङ्गम् । विलक्षभावं विस्मयान्वितत्वम् । पक्षे—च्युतशरव्यत्वम् । 'विलक्षो विस्मयान्विते' इत्यमरः । 'लक्षं लक्ष्यं शरव्यं च' इति च । 'च' इति, 'पलायमानः' चेति पदद्वयम् । अर्थः स्पष्टः । पक्षे—चपला विद्युत् ॥ ११ ॥ शरजालं बाणकदम्बं चमत्कारार्थः । जलसमूहमिति

---

१. 'जाते' क. २. 'प्रभो' ख.

द्वितीयः—

प्रतिकलमनुभुक्तरसो वाहिन्यनुकूलगमनकृतचित्तः ।
चरति भवानिव तेऽरिर्भूभृत्कटकेषु वेङ्कटक्ष्मेश ॥ १३ ॥

श्रीनिवासः—

चक्रं वा श्रियमपि वा तार्क्ष्यं वा शेषनागराजं वा ।
द्द्यां सत्कविवर्यौ तुष्टेन हृदा न चात्र संदेहः ॥ १४ ॥

साहित्यसारमञ्जूषा[2] कमलिनी प्राह—

मधुरालापद्विजकुलसुपक्षपातैकसुन्दरप्रकृतिः ।
भूभृत्सुपन्नगाद्रिर्दृष्टः श्रीश्रीनिवासभूपश्च ॥ १५ ॥

तच्छ्रुत्वा द्वावपि—

अरिरूपं चक्रं श्रीरधिकमलस्था पतत्ययं तार्क्ष्यः ।
नागो विषमहितोऽयं दययालं श्रीनिवासभूप तव ॥ १६ ॥

---

तत्त्वार्थः । एवमग्रेऽपि । चापश्रियं धनुर्लक्ष्मीम् । पक्षे–चेति भिन्नं पदम् । अपश्रियमपगतसंपदम् । ज्या मौर्वी । पक्षे–भूमिः । अपकीर्तियुक्तास्तवारी रुदन्कृषिव्यापारं करोतीति भावः ॥ १२ ॥ प्रतिकलं प्रतिक्षणम् । अरिपक्षे–रसो जलम् । श्रीनिवासपक्षे तु–शृङ्गारादिः । रसा भूमिर्वा । वाहिनी नदी । पक्षे–सेना । 'तरङ्गिण्यां च सेनायां वाहिनी' इति । भूभृत्कटकेषु पर्वतनितम्बेषु । पक्षे–राजन्यसैन्येषु । 'भूभृद्भूमिधरे नृपे' इत्यमरः ॥ १३ ॥ चक्रं राष्ट्रमिति श्रीनिवासाभिप्रायः । सुदर्शनमिति ज्ञात्रोरभिप्रायः । अत एवास्योत्तरश्लोके 'अरिरूपं चक्रम्' इत्याद्युच्यते । एवमग्रेऽपि । श्रियं संपदम् । पक्षे–रमाम् । तार्क्ष्यमश्वम् । पक्षे–गरुडम् । श्वेतनागराजं गजेन्द्रम् । पक्षे–शेषम् ॥ १४ ॥ भूभृत्सु पर्वतेषु राजसु चेत्यर्थद्वयम् । द्विजकुलं पक्षिसमूहः, ब्राह्मणवंशश्च । पक्षपातः पक्षाभ्यां पतनं प्रसिद्धश्च ॥ १५ ॥ चक्रं सुदर्शनम् । अरिरूपं शत्रुस्वरूपमिति निन्दा, अरयुक्तस्वरूपमिति तत्त्वार्थः । एवमग्रेऽपि । श्रीः रमा । अधिकं यन्मलं तत्रस्थाः । पक्षे–अधिशब्दोऽधिकार्थकः । ततश्च—अधिका कमलवसतिः पद्मवासो यस्याः ।

---

१. 'सदा' क. २. 'ततश्च' ख.

ततश्चातिभूमिं गतः संतोषेण वहुधा संमान्य महाकवी—

विना सुरमणीं देवः सर्वाण्याभरणान्यदात् ।
तथा पद्मावती ताभ्यां ददौ स्वं नायकं विना ॥ १७ ॥

ततस्तयोर्यथास्थानं गतयोर्हंसशुकयोर्महाकव्योर्देवोऽपि पद्मावत्या सहान्तःपुरमभजत् ।

जृम्भन्नवरसोल्लासा नानाबन्धमनोहरा ।
मदीयकवितेवेयं क्रीडा रेजे तदा तयोः ॥ १८ ॥

इति श्रीमद्वेङ्कटाध्वरिमहाकवीन्द्रकृतौ श्रीनिवासविलासचम्पूकाव्ये उत्तरभागे प्रथम उल्लासः ॥ १ ॥

---

द्वितीयोल्लासः ।

अन्यदा तु कडिच्चक्रग्रहणव्यग्रया चरणमुखरक्तराजहंसमिथुनविघटनपरया मानितकविनिकरया अनिमिषकदम्बदत्तकटाक्षया अनुगृहीतपु-

---

तार्क्ष्यः गरुडः । पतति शक्त्यभावात् । पक्षे–उड्डीयते । नागः शेषः । विषमश्च हितश्च । पक्षे–विषेण महितः ॥ १६ ॥ विनेति । सुरमणीं शोभनवनितां पद्मावतीं विना पद्मावत्या अप्याभरणनिर्विशेषत्वादिति भावः । स्वं निजं नायकं पतिं श्रीनिवासमिति चमत्कारार्थः । तत्त्वार्थस्तु—सुरमणीं कौस्तुभम् । मणीशब्दः । 'मन्दाक्षरमणीयस्मितम्' इत्यनन्तभट्टः । नायकं हारमध्यमणिम् । माङ्गल्यसूत्रस्थमिति भावः । 'नायको नेतरि श्रेष्ठे हारमध्यमणावपि' इति विश्वः ॥ १७ ॥ स्थानमतिक्रम्य यथास्थानं स्वस्थानमिति यावत् । बन्धः कामशास्त्रप्रसिद्धः । पक्षे–पद्मच्छत्रादिः ॥ १८ ॥ कृतिर्ग्रन्थः ॥ इति श्रीधरणीधरविरचितायां श्रीनिवासविलासचम्पूटीकायामुत्तरभागे प्रथम उच्छ्वासः ॥

अन्यदा त्विति । 'स्वसमानचर्यया देव्या' इत्यनेन 'चक्र–' इत्यादि विशेषणषट्कं पद्मावत्याः श्रीनिवासस्य चेति ज्ञेयम् । चक्रं सुदर्शनम्, पक्षे–पुमांश्चक्र-

ण्डरीकया लालितकमलाशयया स्वसमानचर्यया देव्या पद्मावत्या सह कुत्रचित्सरसि विहृत्य तत्तटभुवि अक्षक्रीडारतस्य श्रीनिवासस्य नयनसरणिमुपाजगाम कविकदम्बम् ।

तच्च प्रतिनन्दितागमनं यथायोग्यं उपाविशत् ।

तत्र कंचनाभिनवं द्विजं विलोक्य देवः पप्रच्छ—'कवे नीलकण्ठ, किमर्थमागमनं भवतः' इति ।

सोऽपि विहस्याब्रवीत्—'देव, अहमपि तदेव चिन्तयन्नागमननिदानं कलयामि ।

तथा हि—'भाग्यवन्तं भवन्तं द्रष्टुमागतोऽस्मि' इति साधारणसरणिः । याचितुमिति स्वलाघवप्रकटनम् । मद्विद्याप्रकटनार्थमित्यात्मस्तुतिमहापातकम् । ग्रामं गच्छंस्तृणं स्पृशतीति वदति प्रकृतविरुद्धालापः । इन्द्रचन्द्रसमानस्य तव दर्शनादैहिकामुष्मिकफलमिति बन्दिचरणानुचरणप्रसङ्गः । अस्तु वा यः कश्चन हेतुः । तथापि दर्शनयोग्यगुणकत्वं देवे न पश्यामि । दानधाराद्रीकृतकरत्वं त्वद्दन्तावलेष्वपि । सदाचरणरत्नभूषितत्वं तव वनिताजनेष्वपि । सूर्यप्रतिपन्थित्वं तव प्रतापेऽपि ।

---

वाकः । चेति भिन्नं पदम् । रणमुखानुरक्ता ये राजहंसा राजश्रेष्ठास्तेषां मिथुनविघटनं स्त्रीपुरुषवियोजनम् । पुंसो हननेनेति भावः । पक्षे—चरणे पादे मुखे च रक्ताः शोणाः पक्षिभेदाः । लीलार्थमिति भावः । कवयः काव्यकराः, जलपक्षिणश्च । 'कं शिरोऽम्बुनोः' इत्यमरः । 'पक्षी च विनिर्गदितः' इति । 'सुरमत्स्यावनिमिषौ' इत्यमरः । पुण्डरीको ऋषिभेदः । पक्षे—क्लीबे सिताम्भोजं च । कमलाशयो लक्ष्मीमानसम् । पक्षे—जलाधारः । 'आशयः स्यादभिप्राये मानसाधारयोरपि' इति । दानधाराद्रीकृतकरत्वं वितरणोदकधाराद्रीकृतपाणित्वमिति चमत्कारार्थः । मदोदकधाराद्रीकृतशुण्डादण्डत्वमिति तत्त्वार्थः । 'करो वर्षोपले रश्मौ पाणौ प्रत्यायशुण्डयोः' इति । एवमग्रेऽपि । सदाचरणं सदाचारः तदेव रत्नम् । पक्षे—आचरणं पादपर्यन्तं रत्नैर्भूषितत्वम् । सूरीणामप्रतिपन्थित्वम् । पक्षे—सूर्य-

---

१. 'वदत्' क-ख.

अथ वा महानुभाव इति गृणासि चेत्कृशानुभावं वहतीत्याक्रन्दते शत्रुवर्गः । विद्वत्सु प्रीतियुक्त इति चेत्कलावत्कोटयस्त्वत्कीर्त्या तिरस्कृताः । सुन्दरोऽसीति चेत्प्राग्जन्मनि कांचन सुन्दरतां संहरता त्वयैवापराद्धम् ।

गौतमशास्त्रप्रक्रियासु कुशल इति चेद्दुःखद्वेषप्रयत्नाधर्मान्न जानासि । किंच । प्रथमं स्वीकरोषि गुणम्, न द्रव्यम् । शब्दराद्धान्तचतुरोऽसीति चेत्, तद्धितविचारं न करोषि इति अभक्तानां वादः । वेदान्तशास्त्रप्रवीणोऽसीति चेत्, वेदनयाक्रान्तो न क्वापि भवान् । मदनागमहृष्टोऽसीति चेत्, तदा विद्वन्निकुरम्बपरिपालनदीक्षाधौरेयतापिशुनकरगतवीरवलयेक्षणं वितर दृष्टिम् । अस्तु वा यं कंचन गुणमादाय दर्शनयोग्यता । तथापि नावयोर्विरुद्धधर्माक्रान्तयोरुचितः समागमः ।

निरतो यशःप्रसारे भवान्यतो वै शयप्रसारेऽहम् ।
क्वाहं क्व भवान्राजन्नवनीपस्त्वं वनीपोऽहम् ॥ १ ॥

---

प्रतिपन्थित्वं समानत्वम् । 'देशीयदेश्यरिष्वाभाः सोदराद्या इवार्थकाः' इति कल्पलता । पक्षान्तरमाह—अथ वेति । कृशानुभावं कृशप्रभावमिति निन्दा । अग्नित्वमिति तत्त्वम् । एवमग्रेऽपि । कलावन्तो विद्यावन्तः । पक्षे—चन्द्राः । सुन्दरता सौन्दर्यम् । 'पक्षे—सुन्दो नाम दैत्यस्तस्मिन्रता आरक्ता ताटका । 'ताटकाख्यां सुन्दः किलैनां परिणीय' इति भोजरामायणे । दुःखादयः प्रसिद्धाः । पक्षे—तर्कशास्त्रप्रसिद्धाः । तद्धितं शब्दशास्त्रप्रसिद्धम् । पक्षे—तेषामभक्तानां हितम् । वेद आम्नायः । नयो नीतिः । पक्षे—वेदनया नतया, इति तृतीया । मदनागमो मन्मथशास्त्रम् । पक्षे—ममानागमः । अर्धाङ्गीकारेणाह—अस्तु वेति । यशः कीर्तिः । शयः पाणिः । अवनीपो राजा । वनीपो याचक इति तत्त्वम् । अत्र पूर्वार्धे 'यशः शयः' इति वर्णव्यत्यासकथनेन विरुद्धधर्माक्रान्तिः । उत्तरार्धे च

दूरीकृतकलिर्यस्मात्तस्मादस्यविभीतकः ।
न चापि मदनासक्तो युक्ता ते ह्यवनीपता ॥ २ ॥

सरलप्रियोऽसि शम्युल्लासी पुन्नागसुप्रियश्चापि ।
सत्सुमनोवृत्तिरपि प्रभुवर्य ततोऽवनीपता मेऽभूत् ॥ ३ ॥

अथ तत्र हंसकविः प्राह—देव, अहमेवं जानामि ।

भूदेवेन्द्रः कविः शश्वद्राजमानगुणोत्तरः ।
अयं त्वत्समतां धत्ते देवमानवशंकरः ॥ ४ ॥

ततः शुकोऽवदत्—

श्रीनिवासाम्बुजमुखविकासकपदावलिः ।
अनन्तोल्लासमाधत्ते हंस एवेति विद्महे ॥ ५ ॥

---

शब्दतो ज्ञेया ॥ १ ॥ ममावनीपत्वमेव कुत इत्यत आह—दूरीकृतेति । कलिः, बिभीतकः, मदनश्च वृक्षभेदः । वनीं पातीति वनीपः स न भवतीति अवनीपः, इति श्लोकनिर्वाहः । कलिर्युगभेदः । अविभीतको निर्भयः । मयि अनासक्त इति प्रभुचित्तानुसरणप्रकारः ॥ २ ॥ स्वस्य वनीपत्वमुपपादयति—**सरलेति** । सरलादित्रयं वृक्षभेदः । 'वनीपको याचनकः' इत्यमरः । सती सुमनोवृत्तिर्विद्वद्वृत्तिर्यस्य । सुमनोभिः पुष्पैः । वनीपता वनपालकत्वमिति चमत्कारार्थम् । तत्त्वार्थस्तु—अवक्रः, शमयुक्तः, पुरुषश्रेष्ठः । 'सिंहशार्दूलनागाद्याः पुंसि श्रेष्ठार्थगोचराः' इत्यमरः । 'वृत्तिर्विवरणे जीव्ये कौशिक्याद्यास्तु वृत्तयः' इति ॥ ३ ॥ **भूदेवेन्द्र इति** । अयं कविः । भूदेवानां ब्राह्मणानामिन्द्रः श्रेष्ठः । श्रीनिवासपक्षे–वसुधापुरंदरः । कविः काव्यकरः । पक्षे–राजा । 'कविः काव्यकरे राज्ञि' इति । उत्तरं प्रतिवचनम् । पक्षे–उत्तरः श्रेष्ठः । मानेन प्रमाणेन वशंकरः । देव, इति संबोधनम् । पक्षे–देवानां मानवानां च सुखकरः । 'उत्तरं प्रतिवाक्ये स्यादूर्ध्वोदीच्योत्तमेऽन्यवत्' इति ॥ ४ ॥ **श्रीनिवासेति** । हंसः सूर्यः । लक्ष्मीनिवासयोग्यं यत्पद्मं तस्य वदनं तद्विकासिका पदानां किरणानामावलिर्यस्य स तथोक्त इति । अनन्तं गमनम् । पक्षे–हंसः कविभेदः । अन्यत्स्पष्टम् ॥ ५ ॥

ततः कमलिनी प्राह—'सुकवे, 'जम्बूवज्जलबिन्दुवज्जलजवज्जम्बालवज्जालवत्' इतीयं समस्या पूरणीया' इति । ततो नीलकण्ठकविः—

वर्षालंकरणं तनोति नितरां यज्जीवनं प्राणिनां
सूर्यानन्दकरं विसारि भुवने यद्धीवरोल्लासकम् ।
भात्युच्चैर्यशसां कदम्बकमिदं श्रीश्रीनिवासप्रभो-
र्जम्बूवज्जलबिन्दुवज्जलजवज्जम्बालवज्जालवत् ॥ ६ ॥

श्रीनिवासः—महाकवे नीलकण्ठ, सर्वतः श्लाघ्या ते वाणी । अथेदानींतनं कालं वर्णय ।

नीलकण्ठः—

भवान्हि सद्वेषपराङ्गनाशं चक्रे लसद्वेषपराङ्गनाशम् ।
द्विर्द्वादशेत्यक्षरसावधानो भूयान्मदीयाक्षरसावधानः ॥ ७ ॥

श्रीनिवासः—अवहितोऽस्मि ।

---

**वर्षालंकरणमिति** । यशःकदम्बमुपमेयम्, जम्ब्वा दिपञ्चकमुपमानम् । वर्षेत्यादि पञ्चकं क्रमेण समानधर्मः । वर्षो भरतखण्डमिति यशःपक्षे । (यदा) वर्षाकालस्तदा जम्बूफलानि भवन्तीति जम्बूपक्षे । 'वर्षोऽस्त्री भरतादौ च जम्बुद्वीपाब्दवृष्टिषु । वर्षा काले स्त्रियां भूम्नि' इति सुधा । जीवनं प्राणः । जलबिन्दुपक्षे–उदकमेव । सूरयो ज्ञानिनः । पद्मपक्षे–सूर्यः प्रसिद्धः । भुवने लोके । विसारि प्रसारि । जम्बालपक्षे–जले विसारि । 'जम्बालः पङ्कः' इत्यमरः । धिया वराः श्रेष्ठा विद्वांसः । जालपक्षे–दाशाः । जालं शणसूत्रम् ॥ ६ ॥ **भवानिति** । सद्वेषा द्वेषसहिता ये परे शत्रवस्तेषां शरीरनाशम् । लसन्वेषो यस्याः सा लसद्वेषा तादृशी या पराङ्गना राधादिस्तस्याः शं सुखं चक्रे । द्विर्द्वादशेति पाशकलिखितसंख्याभेदः । इतिशब्दः प्रकारार्थकः । अक्षरसे द्यूतक्रीडारसे अवधानं यस्य स तथोक्तः । मदीयानि यान्यक्षराणि तत्र सावधानः ॥ ७ ॥

नीलकण्ठः—

'विघटितचक्रो विगलितहरिमण्डल एष वीतनेत्रसुखः ।

सायंतनकालस्ते रिपुरथचर्यां चरत्यये देव ॥ ८ ॥

किं च ।

हरन्सच्चक्रसंतोषं तमो विपुलयन्बहु ।
देव सायंतनः कालो भाति दुष्कविकाव्यवत् ॥ ९ ॥'

अत्रान्तरे द्वारपालेन सविनयं प्रवेशितः कलानिधिनामा कविरागत्य दक्षिणपाणिमुन्नमय्य प्राह—

'पद्मोल्लासभृता सवीरवलयश्लाघ्यः सुरेखाञ्चितः
　पाणिस्ते वरदानवारिमहितानन्दं विधत्ते सदा ।
साधर्म्यं विवरीवरीति भवतानूर्मिर्भवान्सोर्मिक-
　स्तद्वैधर्म्यमपि प्रकाशयति स श्रीश्रीनिवास प्रभो ॥ १०॥'

---

**विघटितेति** ॥ चक्रश्चक्रवाकः । पक्षे—रथाङ्गम् । हरिमण्डलं सूर्यबिम्बम् । पक्षे—अश्वकदम्बम् । नेत्रं लोचनम् । पक्षे—पुमान्नेता । 'नेत्रं नेतरि भेद्यवत्' इति ॥ ८ ॥ **हरन्निति** । समीचीनचक्रवाकसंतोषम् । पक्षे—सज्जनकदम्बहर्षम् । तमोऽन्धकारम् । पक्षे—अज्ञानं तमोगुणं वा । 'तमांसि गुणतिमिरसैंहिकेयाः' इति ॥ ९ ॥ **पद्मोल्लासभृदिति** । ते पाणिः भवता त्वया साधर्म्यं साम्यं विवरीवरीति विस्तारयति । पद्मेत्यादिविशेषणचतुष्टयं पाणेः श्रीनिवासस्य च ज्ञेयम् । पद्मं कमलम् । पक्षे—श्रीः पद्मा । वीरवलयं वीरकङ्कणम् । पक्षे—शूरसमूहः । रेखाः प्रसिद्धाः । पक्षे—रलयोरभेदात् लेखा देवाः । अञ्चितः पूजितः । दानवारि वितरणोदकम् । पक्षे—दानवानामरिरिति महितानन्दम् । न केवलं साधर्म्यं किं तु वैधर्म्यं च प्रकाशयति । सपाणिः सोर्मिको भवान् श्रीनिवासः । अनूर्मिरिति शब्दतो वैधर्म्यम् । तत्त्वार्थस्तु—ऊर्मिकयाङ्गुल्या-

इत्येवं यान्त्यां कस्यांचिद्वेलायामुदितचन्द्रमण्डलमवेक्ष्य 'अयमपरः कलानिधिर्विपुलानन्दं तनोति द्विजराजः' इति भणति वेलावेदके कमलिनी प्राह—

उल्लसितगोकुलश्री राधोज्ज्वलरूप एष शिशिरकरः ।
चरति हरे तव चर्यां तस्माद्युक्तं विधुत्वमेतस्य ॥ ११ ॥

नीलकण्ठः—

कमलिनी कलानिधिगुणवर्णने परेति विस्मयः ।

हंसः—नैतच्चित्रम् ।

पद्मिनीनां परामोदो जृम्भत्यपि पयोधरे ।
श्रीनिवासे समीपस्थे द्वेषादेः क्व नु संभवः ॥ १२ ॥

अत्रान्तरे वेलावेदकः—

रसकल्लोलवान्मीनललामाढ्यः सरित्पतिः ।
देव चन्द्रोदये पद्मावतीवाञ्छेव वर्धते ॥ १३ ॥

---

भरणेन सहितः । षड्भिर्मिरहितः ॥ १० ॥ विपुला भूमिः । पक्षे—पुमान् बहुलः । द्विजराजश्चन्द्रो विप्रश्रेष्ठश्च । **उल्लसितेति** । गोकुलं किरणसमूहः । पक्षे—नन्दस्य । राधा नक्षत्रभेदः । पक्षे—गोपीभेदः । 'विधुर्विष्णौ चन्द्रमसि' इत्यमरः ॥ ११ ॥ कमलिनी पद्मम् । कलानिधिश्चन्द्रः, इत्यतो विस्मय इत्युक्तम् । तत्त्वार्थस्तु स्पष्टः । **पद्मिनीनामिति** । मेघे जृम्भत्यपि कमलानां परिमल इति चित्रम् । वर्षाकाले कमलानामभावात् । तथाप्येतन्न चित्रम् । तत्र हेतुमाह—**श्रीनिवास इति** । यद्यपि पद्ममेघयोर्द्वेष एव तथापि श्रीनिवाससांनिध्यात्स नास्तीति भावः । 'तृष्णे जृम्भसि पापकर्मपिशुने' इति भर्तृहरिप्रयोगः । इति चमत्कारार्थः । तत्त्वार्थस्तु—पद्मिन्यो वनिताभेदाः । आमोदो हर्षः । पयोधरः स्तनः ॥ १२ ॥ **रस इति** । रसो जलम् । पक्षे—प्रीतिः । यथोचितं लिङ्गव्यत्ययः । मीनललामानि मत्स्यश्रेष्ठास्तिमिंगिलादयः । पक्षे—मीनललामो मत्स्यध्वजः कामः । 'प्रधानध्वजशृङ्गेषु पुण्ड्रवालधिलक्ष्मसु । भूषावाजिप्रभावेषु

श्रीनिवासः श्रुत्वा सस्मितं कलानिधिकवये सर्वज्ञचूडामणिख्यातिम्, नीलकण्ठस्य सकलायाः पर्वतभुवः स्वामित्वम्, कमलिन्यै सर्वतोमुखश्रियम्, अन्येभ्योऽपि यथाकामं वित्तं वितीर्य प्रमदागारं प्रविवेश ॥

इति श्रीमद्वेङ्कटाध्वरिमहाकवीन्द्रकृतौ श्रीनिवासविलासचम्पामुत्तरभागे द्वितीयोल्लासः ॥

---

## तृतीयोल्लासः ।

अन्यदा तु क्वापि चिरयति निजनायके श्रीनिवासे देवी पद्मावती कमलिनीमाह—'सखि,

अस्तं प्रयाति वसुमानुदयं प्राप्नोत्ययं पुनर्वसुमान् ।'

कमलिनी—विहस्य । किं ततः ।

देवी—सव्रीडम् । न किमपि ।

केतकी—देवि, कथय कथय ।

कमलिनी—हूं ।

अपरं किं कथनीयं ज्ञातं चित्ते मुकुन्दोऽस्याः ॥ १ ॥

देवी—कथमिव ।

कमलिनी—

पद्मश्रीर्नेत्रयुगे शङ्खरमा सा गले च दन्तेषु ।
कुन्दश्रियो यतः स्युर्ज्ञातं चित्ते मुकुन्दोऽस्याः ॥ २ ॥

---

ललामं च ललाम च ॥' इति रुद्रः ॥ १३ ॥ कलानिधिश्चन्द्रः । सर्वज्ञचूडामणिरिति चमत्कारार्थः । तत्त्वार्थस्तु स्पष्टः । नीलकण्ठः शिवः । सकलायाः कलाभिः सहितायाः । पर्वतभुवः पार्वत्याः । पक्षे—समस्तायाः शेषाचलपृथ्व्याः । कमलिनी पद्मम् । सर्वतोमुखश्रीः जलसंपत् । पक्षे—कमलिनीति काचित् । विश्वतोमुखसंपत् ॥ इति श्रीधरणीधरविरचितायां श्रीनिवासविलासचम्पूटीकायामुत्तरभागे द्वितीय उल्लासः ॥

**अन्यदा तु** । अस्तं तन्नामकं पर्वतम् । 'अस्तः क्षितेे पश्चिमाद्रौ' इति हैमः । वसुमान्सूर्यः । हुमित्यनादरे । **पद्मेति** । शङ्खादयश्चत्वारो निधिभेदाः । अर्था-

देवी—नहि नहि, अन्यत्किमपि वक्तुकामास्मि ।

कमलिनी—तर्हि तत्कथय ।

देवी—

सुपर्वसुन्दरो राकामनोज्ञः कमलोज्ज्वलः ।
विधुर्हरति मे चेतः

कमलिनी—किमपराद्धं मया ।

केतकी—तर्ह्यागतं तयैव सरण्या ।

मालती—

कृष्णः किं

देवी—(सहुङ्कारम् ।)

नहि चन्द्रमाः ॥ ३ ॥

कमलिनी—तर्हि 'अस्तं प्रयाति–' इत्यस्यैतदुत्तरार्धं भवितुमर्हति–

लाप्यन्ते खलु दीपा रात्रौ मुकुलीभवन्ति पद्मानि ॥ १ ॥

इति ।

देवी—(कृतावहित्थम् ।) अथ किम् ।

केतकी—नहि नहि पटवस्त्रस्य कम्बलेन संयोगः ।

देवी—सरोषमिव । तर्हि किं भवितुमर्हति ।

केतकी—

नायाति भवनमधुना कान्तश्चेत्पीड्यते मनो मधुना ।

देवी—(सलज्जमतिष्ठत् ।)

---

न्तरम् ॥ २ ॥ सुपर्वेति । विधुश्चन्द्रो विष्णुश्च । सुपर्वं शोभमानपौर्णमासीतिथिः । 'तिथिभेदे क्षणे पर्व' इत्यमरः । पक्षे–सुपर्ववद्देववत्सुन्दरः । 'राका नवरजोनार्यां पूर्णचन्द्रतिथावपि' इति रत्नकोषः । कमलः कुरङ्गः । 'स्यात्कुरङ्गेऽपि कमलः' इत्यमरः । पक्षे–'कमला श्रीर्हरिप्रिया' इत्यमरः ॥ ३ ॥ 'कमलिनी' इत्यादि सर्वत्र स्थले 'प्राह' इति शेषेणान्वयो ज्ञेयः । 'अवहित्थाकारगुप्तिः' इत्यमरः । अथ किमित्यङ्गीकारे । अधुना इदानीम् । मधुना वसन्तेन । 'स्याच्चैत्रे

कमलिनी—दुःसहः खलु विप्रयोगः सिंहमध्यानां मध्यानाम् । यल्लज्जापि द्वितीयो मदन इव पीडयति ।

केतकी—कृपणानां चेति वक्तव्यम् ।

मालती—किं पुनर्द्विजराजयोगः ।

अत्रान्तरे द्वारपालिका मल्लिकागत्य—'देवि, वर्धसे । यद्देवः श्रीनिवासः प्राप्तोऽयं भवनद्वारे तिष्ठति ।'

(सर्वाः सचकितमुत्थायान्तःप्रविश्य बद्धकपाटा अतिष्ठन् । ततश्च देवोऽप्यन्तःपुरकपाटमासाद्य—) 'द्वाः ।'

देवी—मन्दं मन्दम् । सखि कमलिनि, तूष्णीं तिष्ठ । छलाम्येनम् ।

मालती—एवमेव कर्तव्यं एकद्विवारम् । येन देवोऽपि ज्ञास्यति ज्ञातव्यम् ।

देवी—

कस्त्वं

श्रीनिवासः—

चक्री

देवी—(साश्चर्यम् ।)

नरेन्द्रालयभुवि

---

चैत्रिको मधुः' इत्यमरः । मध्या वनिताभेदः । 'समानलज्जामदना मध्या' इति रसमञ्जरी ॥ विप्रयोगो वियोगः । पक्षे–द्विजेन संगतिः । द्विजराजश्चन्द्रः, द्विजश्रेष्ठश्च ॥ द्वाः द्वारम् । उद्घाटय इति शेषः । उक्तशब्दस्यार्थान्तरं परिकल्प्योत्तरकथनं छलः ॥ **कस्त्वमिति** । चक्री चक्रवान् । नारायण इत्यर्थः । चक्रिशब्दस्यार्थान्तरं परिकल्प्य देव्याह—**नरेन्द्रेति** । नरेन्द्रो व्यालग्राही । व्यालग्राहिशब्दात्कथं न बिभेषीति भावः । श्रीनिवासस्तु 'देव्याश्छलोक्तिभङ्गीमनवगत्य नरेन्द्रशब्दस्य राजार्थत्वमभिप्रेत्य ममागमनपरिज्ञानमात्रादन्यशङ्कया

श्रीनिवासः—

ललने श्रीनिवासः

देवी—(समन्दहासम्।)

सुमन्त्रि-

श्लाघ्यायां

श्रीनिवासः—

हासि कृष्णः शशिमुखि

देवी—(सावहेलम्।)

कमये ताक्ष्यर्जातावृतायाम्।

श्रीनिवासः—

मद्भोगे देहि दृष्टिं

देवी—(सरोषम्।)

मम रमणपदाघातभग्नः

---

'राजभवनद्वाराभिसरणमकाले तव नोचितमिति वक्ति देवी' इति ज्ञात्वा प्राह—**श्रीनिवास इति**। लक्ष्मीनिवास इत्यर्थः। श्रीशब्दस्य 'विषम्' इत्यर्थान्तरं परिकल्प्य देव्याह—**सुमन्त्रीति**। शोभनसर्पमन्त्रज्ञा अत्र सन्ति। विषनिवासमपि सर्पं बध्नन्तीति भावः। श्रीनिवासस्तु 'शोभनराजमन्त्रिणोऽत्र सन्ति, ते त्वां शिक्षयन्ति' इति। देवी वक्तीत्याह—**कृष्ण इति**। वासुदेवः। कृष्णशब्दस्य 'नीलवर्णः' इत्यर्थान्तरं परिकल्प्य देव्याह—**ताक्ष्येति**। ताक्ष्यर्जातो गरुडः। कालियनाम्नः कृष्णवर्णस्य विषनिवासस्य सर्पस्य तव महामन्त्रज्ञविषवैद्यभयाभावेऽपि गरुडस्त्वां मारयतीति भावः। 'सुपर्णपक्षाभिहतः कालियोऽतीव विह्वलः' इति श्रीभागवतम्। श्रीनिवासस्तु—'ताक्ष्यर्जातोऽश्वसंघः'। 'कृपया राजमन्त्रिभिस्त्यक्तमप्यश्वचारास्त्वां न त्यजन्ति इति देवी वक्ति' इत्याह—**मद्भोगे देहीति**। भोगः सुखम्। भोगशब्दस्य 'फणा' इत्यर्थान्तरं कल्पयित्वा देव्याह—**मम रमणेति**। त्वत्फणाया भगवत्पदलाञ्छितत्वाद्-

श्रीनिवासः—

स को वा

देवी—(सलज्जम् ।) सखि कमलिनि, न जानात्ययं देवस्य नामापि त्रिभुवनरक्षाधौरेयस्य ।

कमलिनी—भण भण । शृणुमस्तावद्वक्तव्यसीमाम् ।

यन्मकरन्दरसौघो यच्च तरङ्गः सुधासमुद्रस्य ।
यच्चैन्दवकरसारो यच्चासारो मृगाक्षि गोस्तन्याः ॥ ४ ॥

श्रीनिवासः—(स्वगतम् ।) परोक्षेऽपि प्रणयभूयिष्ठानि कमलिनीवचनानि शीतलयन्ति मे मानसम् ।

देवी—

कंसारिः

श्रीनिवासः—

सोऽहमस्मि

ततश्च ।

इत्युदितवति हरौ सा जहासोत्पलाक्षी ॥५॥

कमलिनी—देव, एतावत्कालपर्यन्तं क्व भवान् ।

श्रीनिवासः—क्षम्यताम् । तत्र तत्र वनलताकुञ्जेषु राधोत्सवमनुभवता मया यापितोऽर्धरात्रः ।

---

रुडान्मास्तु भयम् । तथापि मद्रमणः पुनस्त्वां शिक्षयेदिति भावः । 'द्वीपं रमणकं हित्वा ह्रदमेनं समाश्रितः । यद्भयात्स सुपर्णस्त्वां नाद्यान्मत्पादलाञ्छितम् ॥' इत्यर्थः । 'तच्चित्रताण्डवविरुग्णफणातपत्रे–' इति च । 'नरेन्द्रो वार्तिके राज्ञि विषवैद्येऽपि' इति विश्वः । 'वेदभेदे गुप्तिवादे मन्त्रः' इत्यमरः । 'तुरङ्गगरुडौ तार्क्ष्यौ' इत्यमरः ॥ शृणुमस्तावत् इत्यत्र हास्यरसः । इन्दोरयमैन्दवः । करसारः किरणस्थिरांशः । 'आसारो वेगवद्वर्षे' इति 'मृद्वीका गोस्तनी द्राक्षा' इत्यमरः । अन्यत्स्पष्टम् ॥ ५ ॥ राधो वैशाखः । 'वैशाखे माधवो राधः'

देवी—(स्वगतम्।) अहो, अद्यापि न विस्मरति राधाविलासो देवस्य।

जाराणां मानसं नित्यं पांसुलामनुधावति।
शततारापतिश्चन्द्रस्तारामन्यामकामयत्॥ ६॥

त्वं तत्त्वमान्तरं शश्वत्त्वं वै प्राणा बहिश्चराः।
इत्युक्त्वैव पुनः कृष्णो यद्वा दैवमदक्षिणम्॥ ७॥

(प्रकाशम्।) धार्ष्ट्यमवलम्ब्य। किमत्रागमने कारणम्।

श्रीनिवासः—सदङ्गनाशरणद्वारमिति।

देवी—अङ्ग—(इति साम्रेडितम्।) नेदं युद्धस्थानम्।

श्रीनिवासः—न केवलं स्वल्पयुद्धस्थानम्, किं तु अतनुयुद्धस्थान-मेतत्।

देवी—(सत्रपानन्दं कपाटमुद्धाट्यातिष्ठत्।)

ततश्च श्रीनिवासे प्रवेष्टुमिच्छति सति प्रसार्य बाहुं तिर्यग्द्वारदेशे (स्थित्वा।) कमलिनी—

मा गच्छ शोणिमा नेत्रे पद्मावत्या विराजते।

श्रीनिवासः—

रजःस्नातासु नारीषु प्रायेणैवं भविष्यति॥ ८॥

---

इत्यमरः। इति देवाशयः। राधा गोपीति देव्यभिप्रायः॥ **जाराणामिति**। पांसुलाऽसती। शततारा शतसंख्याकनक्षत्राणि। अन्यां तारां नक्षत्रान्तरमिति श्लोकनिर्वाहः। शततारा नक्षत्रभेदः। तारा गुरुपत्नीति तत्त्वार्थः॥ ६॥ **त्वं तत्त्वमिति**। आन्तरं तत्त्वम्। अन्तःकरणम्। एवंविधव्यापारप्रवृत्तः। अन्यासक्ते भर्तरि स्त्रीणामतीव दुःखमिति भावः। पक्षान्तरमाह—**यद्वेति**। अदक्षिणं प्रतिकूलम्। नात्र कृष्णस्यापराधः। दैवमेव पूर्वं तथोक्त्वेदानीमेवं करोतीति भावः॥ ७॥ अङ्गनायाः शरणं गृहम्। पक्षे—अङ्गस्य शरीरस्य नाशो यस्मात्स तादृशो यो रणो युद्धं तस्य द्वारम्। 'आम्रेडितं द्विस्त्रिरुक्तम्' इत्यमरः। अतनु अनल्पम्। पक्षे—अतनुर्मदनः॥ **मा गच्छ शोणिमेति**। नेत्रे नयने।

कमलिनी—मानवतीति ब्रवीमि ।

श्रीनिवासः—बहुमानवतीति वक्तव्यम् । मध्यस्थासु युष्मासु किं न्यूनम् । (देवीं प्रति ।)

पद्माभं मुखवत्प्रिये कुवलयश्रीसत्क्रियार्हं च ते
हृग्वत्कुन्तलवन्मृगाक्षि सुमनःश्रेणी मनोज्ञे तव ।
रम्भाधिक्कृतिदक्षमूरुयुगवद्वक्षोजवत्तेऽचल-
श्रीकं मानवदङ्गनेति चपलं जीयाच्छरीरं सदा ॥ ९ ॥

देवी—देव, सुराधिकोल्लासरीतिमेव भज । तयैव सप्रमदो भव ।

कमलिनी—(देवीं प्रति ।)

कोपः कृशानुभावं वहतु च मानः कुलस्त्रिया रक्ष्यः ।
देवि हितं कथयामि शृण्वेतं कलय मा भुजङ्ग इति ॥ १० ॥

श्रीनिवासः—(स्वगतम् ।) कमलिनीवचनमपि कर्दमस्तम्भप्रतोलीमाश्रयति । (प्रकाशम् ।)

---

पक्षे—वक्त्रे रक्तिमा । इति हास्यरसः ॥ ८ ॥ 'मानः कोपोऽभिमानश्च' । किं न्यूनमिति काकुः ॥ **पद्माभमिति** । पद्मा लक्ष्मीः । कुवलयं भूमण्डलम् । सुमनसश्चतुराः । पक्षे—पुष्पाणि । रम्भाप्सरसः कदली च । अचलश्रि पर्वतलक्ष्मीकम् । मानवत्कोपभेदवत् । अतिक्रान्तविद्युत्, अतिचञ्चलं च । क्षणकोपा त्वमिति भावः ॥ ९ ॥ शोभना या राधिका तयैव राधिकयैव सप्रमदः सस्त्रीकः । इति मर्मोद्घाटनप्रकारः । तत्त्वार्थस्तु—सुरेषु देवेषु । तयैव रीत्यैव सप्रमदः ससंतोषः ॥ **कोप इति** । कृशानुभावमनित्वमिति कलहवृद्धीकरणप्रकारः । कृशमाहात्म्यमिति सान्त्वनप्रकारः । मानः कोपभेदः । पक्षे—अभिमानः । माया लक्ष्म्या भुजङ्गः पतिः । अनेन सपत्नीसक्तत्वं ज्ञापितम् । पक्षे—विट इति मा

स्पृशान्यहीनां मालां च त्यज कोपमणूद्रे ।
शब्दविन्यासदोषो मे नाहमद्यापराधिकः ॥ ११ ॥

कमलिनी—(स्वगतम् ।) अत एव देवी कुप्यति । (प्रकाशम् ।) देवि, शृणुमस्तावत् । किंनरो गायति ।

किंनरः—

सश्रीकं मानितं देवासुरसंघैर्घनप्रभम् ।
मानगम्यमहो हन्त

कमलिनी—देव, श्रवणातिथीकृतः खल्वयं पादोनः श्लोकः ।

श्रीनिवासः—सखि, जानाम्यष्टदलपद्मबन्धनिबन्धनमेतत्पद्यम् । अस्य तुर्यः पादः

श्रीनिवासं नमाम्यहम् ॥ १२ ॥

इति । किंच ।

अजहत्तालसौन्दर्यं सुरागश्रीयुतं मनः ।
गीतं हरति पद्माक्षि देवीस्तनयुगीव नः ॥ १३ ॥

(देवी वस्त्रान्तेन गूहितकुचातिष्ठत् ।)

---

कलय न जानीहीति ॥ १० ॥ **स्पृशामीति** । अहीनां सर्पाणां मालां पङ्क्तिम् । आपराधिकः अपराधवानिति देवाभिप्रायः । हीना नेत्यहीना तादृशीं मालां हारम् । 'माला पङ्क्तौ पुष्पादिदामनि' इति भास्करः । अपगता राधिका यस्मात्सोपराधिकः । राधिकां न त्यजामीति भावः । इति देव्यभिप्रायः ॥ ११ ॥ अत एव राधिकापरित्यागादेव । 'यत्तु सर्वजनश्राव्यं तत्प्रकाशम्' इति भरतः ॥ **सश्रीकमिति** । अहो हन्तेति संतोषे । पादेनोनो हीनः पादोनः ॥ १२ ॥ 'तालः कालक्रियामानम्' । पक्षे—तालफलम् । रागो भैरव्यादिः । पक्षे-सुराणामगः सुमेरुः । गीतं मनोहरतीत्यन्वयः । यथोचितं लिङ्गव्यत्ययः ॥ १३ ॥

श्रीनिवासः—

सर्वभूभृत्स्मयहरे जृम्भच्चक्रश्रियान्विते ।
मयि स्तनद्वये चाद्य नेत्रान्तः प्रसरत्यहो ॥ १४ ॥

देवी अवनतवदना आसीत् ।

श्रीनिवासः—

सुरोहितललामाढ्यं राजवृन्दजयावहम् ।
अधः करोषि सुरते कस्मान्मामिव ते मुखम् ॥ १५ ॥

देवी—उन्मस्तकितकोपावेशम् । त्वां सुरते अधः करोतु सा राधा ।

श्रीनिवासः—

हंहो त्वमेव हि सदानन्दघोषमनोहरा ।
गोरसैः सुखदा पद्मावति सा राधिका मता ॥ १६ ॥

देवी—(स्वगतम् ।) अस्थिरान्तरस्यास्य वेणोरिव मधुरा गिरो बहिः प्रसरन्ति ।

---

**सर्वेति** । भूभृद्राजा पर्वतश्च । स्मयो गर्वः । चक्रं सुदर्शनम् । पुमान्कोकः । नेत्रान्तः कटाक्षः, वस्त्राञ्चलम् ॥ १४ ॥ **सुरोहितेति** । रोहितललामं कुङ्कुमतिलकम् । पक्षे—रोहितललाम मत्स्यध्वजो मदनः । 'रोहितं कुङ्कुमे रक्ते ऋजुशक्रशरासने । पुंसि स्यान्मीनमृगयोर्भेदे' इति रत्नकोषः । चन्द्रवृन्दम् । पक्षे राजवृन्दम् । मुखमधः करोषि अवनमयसि अनुन्मुखीकरोषि । पक्षे—तिरस्करोषि । शोभना रतिरासक्तिर्यस्याः सा तत्संबोधनं हे सुरते इति श्रीनिवासाभिप्रायः । सुरते निधुवने मामधः करोषि अनूर्ध्वीकरोषि । उपरिसुरतासक्तासीति भावः । इति देव्यभिप्रायः । अत उन्मस्तकितेत्युक्तम् ॥ १५ ॥ **हंहो इति** । हंहो अहो । 'हंहो चेतः प्रकृतिरपरा' इति काशीदेशामरक (?) प्रकारः । सा प्रसिद्धा राधिका त्वमेवेति चमत्कारार्थः । सारा स्थिरांशभूता अधिका चेति तत्त्वार्थः ॥ सदेति भिन्नं पदम् । नन्दघोषः नन्दव्रजः, गोरसा दध्यादयः ।

कमलिनी—यावन्नुट्यति तावत्कर्षणं नोचितम्।

देवी—उभयत्रापि तव स्थितिः।

पुनः किंनरः—

घटयति वियोगिचक्रं तनुते नितरां हि कुवलयोद्बोधम्।
किमयं महिमा रात्रेर्यद्वा चरितं निशान्तकालस्य॥ १७॥

कमलिनी—तर्हि प्रबोधकालः पद्मिनीनाम्।

केतकी—न केवलं स्थावराणाम्, किंतु जङ्गमानां च।

देवी सापराधेवाकुला कुलनक्षत्रमालं म्लायच्चन्द्रमुखं गगनमपश्यत्। श्रीनिवासोऽपि तद्देहम्।

ततश्च श्रीनिवासेऽप्यसहमानमीनकेतनावेगेन देव्यां प्रसारयति पाणिं कमलिनी प्राह—देवि,

जृम्भत्केसरमालो मुग्धे सारङ्गनिर्वृतिनिदानम्।
भवतीं गृहीतुमिच्छत्येष हरिः कोऽत्र शरणं ते॥ १८॥

देवी—(सभयम्।) आर्यपुत्र, त्रायस्व माम्। हरिर्गृहीतुमिच्छति। (इत्यालिलिङ्ग।)

श्रीनिवासः—मा भैर्वियन्नृपालतनये।

---

पक्षे—समीचीनानन्दध्वनिः। वाग्रसाः॥ १६॥ अस्थिरान्तरश्चपलान्तःकरणः। पक्षे—असारान्तःप्रदेशः। घटयतीति। विप्रयुक्तजनकदम्बम्। पक्षे—वियोगिकोकम्। कुवलयं पुष्पम्। प्रबोधो विकासः। पक्षे—भूमण्डलम्। निद्राभावः॥ १७॥ कमलिनीनां विकाससमयः। वनिताभेदानां प्रकृष्टज्ञानकालः। कुपिता अपि ता अङ्गीकृतसुरता भवन्तीति भावः॥ जृम्भदिति। हरिः कृष्णः। पक्षे—सिंहः। केसरपुष्पहारः। पक्षे—सटापरम्परा। 'सुखनाशौ च निर्वृती' इति॥ १८॥ 'आर्यपुत्रेति संबोध्यः पतिः पत्नीजनेन तु' इति भरतः॥

इत्याश्वास्य सशिरःकम्पमघटितघटनापटीयसीं नियतिमभिनन्द्य तया सह मृदुलां शय्यां सुकविकाव्य इव प्रविवेश ।

इति श्रीमद्वेङ्कटाध्वरिमहाकवीन्द्रकृतौ श्रीनिवासविलास-
चम्प्वामुत्तरभागे तृतीयोल्लासः ।

---

चतुर्थोल्लासः ।

एकदा तु वेङ्कटवराहकलत्रं धरादेवी स्वामिसरस्तीरे हसन्ती प्राह—'वासु पद्मावति, कलितपत्तनस्थितिरभिनवतयासद्विहारस्थलीं भूधरं विलोक्य चित्तजातकुतूहलेनाक्रान्तेव वर्तसे ।'

पद्मावती—(स्वगतम् ।) अहो परिहासपरिपाटी वसुमतीदेव्याः । (प्रकाशम् ।) देवि धरे, इयं कादम्बिनीश्यामला व्यक्तिस्तरलयति मे मानसम् ।

धरादेवी—सत्यं वदसि पीनपयोधरमहिमायम् ।

पद्मावती—धरित्रि, राजहंसविहाराभावान्न शोभते वेलेयम् ।

धरादेवी—सखि, वैकुण्ठः क्व गतः सुन्दरि, ते भर्ता ।

पद्मावती—(स्वगतम् ।) देवं श्रीनिवासमपि पृशति । इतः परमार्यमर्यादा पटले स्थाप्या । (प्रकाशम् ।) अयि वसुधे, इदानीमेव युष्मत्क्रोडदर्शनार्थं गतः ।

---

शय्या प्रसिद्धा । 'शय्येत्याहुः पदार्थानां घटना च परस्परम्' इति सरस्वतीकण्ठाभरणे ॥ इति श्रीधरणीधरविरचितायां श्रीनिवासविलासचम्पूटीकायामुत्तरभागे तृतीय उल्लासः ॥

वासु बाले । 'बाला स्याद्वासूः' इत्यमरः । असद्विहारस्थलीं असत्सुरतयोग्यम् । भूधरं वराहदेवम् । चित्तजातः काम इत्याकूतम् । विहरणस्थानं पर्वतम्, हृदयोत्पन्नमिति बाह्यार्थः । 'कादम्बिनी मेघमाला' इत्यमरः । तद्वच्छयामला व्यक्तिः पदार्थः कृष्ण इत्याकूतम् । पक्षिभेद इति बाह्यार्थः । वै इति

धरादेवी—तेन किं फलम् ।

पद्मावती—रतिं विना किमन्यत् ।

धरादेवी—भूस्वीकृतिदाक्षिण्यमिति किं न भणसि ।

पद्मावती—रक्षितमर्यादया न स्पष्टमुक्तम् ।

अत्रान्तरे स श्रीनिवासो वराहस्तमेव देशं प्राप्तः प्राह—'वत्स वासुदेव, वृषाकारः कश्चिद्दैत्यः श्यामाकक्षेत्रदूषक इति श्रुतम् । अतो योद्धुमिच्छामि ।

श्रीनिवासः—वसुंधरारमण, जरतोऽपि देवस्याद्यापि अतनुयुद्धस्पृहा न विरमति ।

वराहः—वत्स, वसुधारागो दुष्परिहारः ।

श्रीनिवासः—तर्हि किरिचक्रं प्रेषय ।

वराहः—सहस्रारं चक्रमेव प्रेषयामि ।

श्रीनिवासः—अहमपि देवस्य सहायो भवितुमुत्सहे जराशिथिलत्तसंधिबन्धावयवस्य ।

वराहः—(विहस्य ।) कृतं कृतमतिसाहसेन । येयं हिरण्याक्षनियोधनसहायभूता साहाय्यं करिष्यति धरणीकुचभारादपि गुरुतरी गदा, त्वं तु वसुधां पद्मावतीं च ममागमनं च प्रतिपालयंस्तिष्ठेति प्रचलितः ।

---

भिन्नं पदम् । 'कुण्ठो मन्दः क्रियासु यः' इत्यमरः । इत्याकूतम् । 'वैकुण्ठो नारायणः' इति बाह्यार्थः । स्पृशति निन्दति । 'पटलं छदिः' इत्यमरः । 'न ना क्रोडं भुजान्तरम्' इत्यमरः । इत्याकूतम् । 'क्रोडो भूदारः' इति बाह्यार्थः । रतिः सुरतम् । पक्षे—आसक्तिः । भूर्धरादेवी । पक्षे—भूमिः । श्यामाका धान्यभेदाः । क्षेत्रं केदारम् । 'पुंनपुंसकयोर्वप्रः केदारः क्षेत्रमस्य तु' इत्यमरः । जरतो वृद्धस्य । अतनुयुद्धं मदनयुद्धम् । पक्षे—अनल्पयुद्धम् । भूम्यनुराग इत्याकूतम् । भूदेव्यनुराग इति दैवाज्जातोऽर्थः । हास्यरसः । किरयः कोलाः । चक्रं सैन्यम् । सहस्रारं सुदर्शनम् । कृतं कृतमलमलम् । 'कृतं युगेऽलमर्थे च विहिते

श्रीनिवासः—देवि धरे, इदानीं मदधीनासि खलु ।

धरादेवी—देव, यदा रसातलादुद्धृता भवता वराहरूपेण ।

अत्रान्तरे कश्चित्किंनरः पपाठ—

लोकाज्ञातनिदानकहरनर्तनमूलकारणं ब्रूमः ।
तव सुपयोधरदर्शनमिति यस्माद्गौरि नीलकण्ठोऽयम् ॥ १ ॥'

देवी—आर्या गीयते ।

तच्छ्रुत्वा लक्ष्मणा नाम सखी प्राह—'न केवलं गीयते स्तूयते च ।'

श्रीनिवासः—सद्वृत्तेयं गीतिः ।

लक्ष्मणा—देवीस्तनद्वयीव ।

श्रीनिवासः—(समन्दहासम् ।) अनन्तरागमनोहरया देवीस्तनद्वय्या परिमितरागा किमित्युपमीयते गीतिः ।

देवी—(साभ्यसूयमिव ।) इयं लक्ष्मणा खलु जानाति कलहं सलक्षणम् ।

श्रीनिवासः—देवि, कुतस्ताम्यसि । तानि परिहासवचनानि कुसुमानि ।

देवी—हुं । कुसुमानि सुसुमनानि वानवसरे प्रयुक्तानि तान्येव किं न शरजालानि ।

---

हिंसिते त्रिषु' इति । प्रतिपालनं रक्षणं मार्गनिरीक्षणं च । 'वृन्दारकानीकप्रतिपाल्यमानरथः' इति भूपरामायणे । लोकेति । 'निदानं त्वादिकारणम्' इत्यमरः । मेघः, मयूरः । इति कारणकथनप्रकारः । स्तनः, शिव इति तत्त्वार्थः । 'महेश्वरे मयूरे च' इत्यारभ्य 'नीलकण्ठशब्दः' इति लिङ्गाभट्टः ॥ १ ॥ आर्या वृत्तभेदः, पार्वती च । वृत्तं पद्ये वर्तुलं च । 'वृत्तं पद्ये चरित्रे त्रिष्वतीते दृढनिस्तले' इत्यमरः । कलहं प्रसिद्धम् । सलक्षणं जानाति । 'हंसस्य योषिद्वरटा सारस्य तु लक्ष्मणा' इत्यमरः । कलहंसः तल्लक्षणमिति च । सारसकलहंसयोः पक्षित्वेन साम्यात् लक्ष्मणा कलहंसलक्षणं जानातीत्युक्तम् । कुसुमानि पुष्पाणि ।

लक्ष्मणा—देव, प्रायेणेयं मदनासक्तेव लक्ष्यते ।

श्रीनिवासः—तथा वक्तुं जडीभवति मे जिह्वा यतस्त्वयैवोक्तमद्य ।

चकितचकितं कापि कापि प्रमादगतं घनं
घनमिव निजं कान्तं भूयो वने कलयत्यहो ।
विरहविधुरा माकन्दद्रुभ्रमद्भ्रमराङ्गना
रणितमपि सा धत्ते तुष्ट्यै न नागवधूरिति ॥ २ ॥

देवी—(स्वगतम् ।) आः, पापया भिन्नं रहस्यम् । (प्रकाशम् ।) हरिणीवृत्तमेतत् । यतो न समरसलभ्रानुबन्धि ।

कमलिनी—अतनुसमरसलभ्रानुबन्धीति वक्तव्यम् ।

लक्ष्मणा—करिणीवृत्तमेतत् ।

श्रीनिवासः—तरुणीवृत्तमिति वक्तव्यम् ।

देवी—(सलज्जम् ।) अलीकमेव वर्ण्यते प्रियसख्या ।

लक्ष्मणा—तर्हि नालीकं वर्णयामि ।

भ्रमरकमनोज्ञमेतत्सौरभ्योत्पत्तिकुलभवनम् ।
भुवनेऽभ्यस्थितिरम्यं नालीकं भाति नृपकन्ये ॥ ३ ॥

श्रीनिवासः—एतदप्यलीकवर्णनमेव जानामि ।

---

कुत्सितपुष्पाणि इति च । 'कुसुमानि सुमानि' इति लोकोक्तिः । 'प्रसूनं कुसुमं सुमम्' इत्यमरः । अनवसरे अकाले । कोपकाले परिहासो न कार्य इति भावः । 'परिहासोऽप्यनौचित्यम्' इति विद्यानाथः । रुषोक्तौ हुमिति । मदनासक्ता मन्मथक्रीडासक्ता । पक्षे—मथनासक्ता । चकितेति । घनं अविरलम् । बहुलमिति यावत् । नागवधूः करिणी ॥ २ ॥ हरिणीवृत्तं वृत्तभेदः । करिण्याः वृत्तम् । चरित्रम् । अन्यापदेशरीत्या वनिताचरित्रम् । अलीकमसत्यम् । नालीकं वर्णयामीत्यत्रासत्यादन्यत् । सत्यमिति बाह्यार्थः । पद्ममित्याकूतानुसारेण वर्णनं ज्ञेयम् । भ्रमरकेति । भ्रमरका भृङ्गाः । सौरभ्यं परिमलः । भुवनं जलम् ॥ ३ ॥

एतस्मिन्व्यतिकरे उद्यानद्वारपालेन निवेदितम्—'देव, सुमनसां विषये का वाञ्छा ।' इति ।

श्रीनिवासः—मालिकाः करणीयाः ।

स तु पुनः प्राह—'देव, विद्वन्निकुरम्बं द्वारि तिष्ठतीति विज्ञापयामि ।'

श्रीनिवासः—(विहस्य ।) प्रवेशय । को विचारः ।

ततो विपश्चिद्वृन्दमागत्य यथायोग्यमुपविष्टम् । तत्र कश्चित्कहोडनामकः प्राह—

सतीकण्ठे लग्नः करधृतकुमारो न नगरं
　जुषन्नद्रौ तिष्ठन्गमयति च कालं सुकठिनम् ।
इदानीं राजेन्द्र त्वदरिनिवहः स्थाणुसमतां
　प्रयात्युच्चैस्त्वं वै मनुजपदवीं यासि किमिदम् ॥ ४ ॥

अन्यः सोमनाथकविः—

रक्तं स्वाङ्गजमाशु भूमिवलये निक्षिप्य जन्याङ्गने
　हित्वा बाणमसौ भिनत्ति नितरां देवस्य संपश्यतः ।

---

एतदपीति । अलीकं नालीकशब्दप्रतियोगीति बाह्यार्थः । फालमित्याकूतम् । 'अलीकमनृते प्रोक्तं ललाटाप्रिययोरपि' इति । फालपक्षे । ललाटकाः चारुत्वं जगदित्यर्थः । 'भ्रमरः कामुके भृङ्गे ललाटालकयोरपि' इति । सुमनसो विद्वांसः पुष्पाणि च । सतीति । अरिनिवहः स्थाणुसमतां शिवसाम्यमिति स्तुतिः । स्कन्धशाखादिरहितवृक्षसाम्यमिति तत्त्वार्थः । 'स्थाणुः कीले हरे' इति । सती पार्वती । पक्षे साध्वी । 'तव संसती नाम चरमा' इति सौन्दर्यलहरी । कुमारः स्कन्दः पुत्रश्च । नरं न जुषन्निति । न जुषन्नेवेत्यर्थः । पक्षे नगरं पत्तनं न जुषन् । अद्रौ कैलासे । पक्षे पर्वते । कालं मृतं गमयति युक्तं करोति द्रावयतीति यावत् । मृत्युंजयत्वात् । पक्षे समयम् । 'कालं मृत्यौ महाकाले समये यमकृष्णयोः' इति । रक्तमिति । रक्तं अनुरक्तम् । स्वाङ्गजं

मैत्रं मण्डलमप्यथोच्चपदवीं प्राप्नोत्यरिक्ष्मापति-
व्यूहस्ते विजयः कथं तदितरस्तस्मिन्कथं वर्ण्यताम् ॥ ५ ॥

श्रीनिवासः—(सहर्षम्) 'सन्त्येवात्र सहस्रशो युवतयः सा चातुरी दुर्लभा' इति समस्यामाह ।

कहोडः—

आसक्ते मयि पुष्पिणीति शयनं गेहाद्बहिः कल्पितं
नीतश्च प्रतिवेशिनी कपटतः पार्श्वं तदाहं त्वया ।
केलीकण्ठरवः कपोतनिनदव्याजेन गोपायितः
सन्त्येवात्र सहस्रशो युवतयः सा चातुरी दुर्लभा ॥ ६ ॥

सोमनाथः—

छित्त्वा पुष्करमालिकां स तु बलादालोलयन्कुञ्जरा-
न्भिन्दन्कुम्भमसौ करं च कलयन्नाकर्षति स्म स्फुटम् ।
कृष्णः किं न हि केसरीत्युपवने श्वश्र्वास्तया वञ्चिता
सन्त्येवात्र सहस्रशो युवतयः सा चातुरी दुर्लभा ॥ ७ ॥

---

स्वसुतम् । बाणं शरम् । मैत्रं मण्डलं सुहृत्कदम्बं । उच्चपदवीं महाराजत्वं इति शत्रुसमूहस्तुतिः । तत्त्वार्थस्तु—स्वदेहोद्भवं शोणितम् । शरीरम् । सूर्यमण्डलम् । वीरस्वर्गम् । 'रक्तोऽनुरक्ते नील्यादिरञ्जिते लोहिते त्रिषु । क्लीबं तु कुसुमे ताम्रे प्राचीनामलकेऽसृजि' इति सुधा । 'बाणशब्दस्य शरीरवाचकत्वं निर्वाणसुखम्' इति रत्नावलीव्याख्यानाज्ज्ञेयम् । 'एतद्बाणमवष्टभ्य विदारयामि' इति श्रुतिश्च । 'बाणो दैत्ये पृषत्के च स्मेऽङ्गे केवले भवेत्' इति लिङ्गभट्टः ॥५॥ **आसक्ते मयीति** । पुष्पिणीत्वमसत्यमिति ज्ञापनायेत्युक्तम् । नीतः प्रापितः । प्रतिवेशिनी निकटवेश्मस्था । 'दृष्टिं हे प्रतिवेशिनि' इत्यमरके । केलीकण्ठरवः मणितम् । गोपायितः गूहितः ॥६॥ **छित्त्वेति** । पुष्करमालिकां शुण्डाग्रपङ्क्तिं छित्त्वा । कुञ्जरान्गजान् । आलोलयन्नाकुलयन् । कुम्भं इभमूर्धानम् । करं शुण्डामिति केसरिपक्षे । कृष्णापक्षे—पद्महारम् । कुन्तलान् । घटम् । पाणिम् । 'पुष्करं द्वीपतीर्थाहिखगराजौषधा-

श्रीनिवासः—(स्वगतम् ।) उद्घाटितं मर्म महाकविभ्याम् । प्रत्युक्ता खलु सा सरणिः ।

कमलिनी—देव, कदा ।

श्रीनिवासः—यदादिमधुराधरा स्वीकृतिः । तिष्ठत्वेतत् । महाकवी, मेघावली वर्णनीया ।

कहोडः—शिव शिव । अस्पृष्टदोषगन्धे देवेऽष्टमरससहचारी पापाली ।

श्रीनिवासः—कादम्बिनीं वर्णय ।

कहोडः—देव, वर्षासमये हंसाङ्गनानां न प्रचारः ।

श्रीनिवासः—एनां जलधरावलीं वर्णयेति भणामि ।

कहोडः—(स्वगतम् ।) कथं राजदारान्वर्णयामि ।

प्रथमः—यदाज्ञापयति देवः ।

अतिरोहितकान्त्यधरश्रीवत्सज्जघनलक्ष्मिकुन्तलवत् ।
गिरिमधुरं कुचयुगवद्देव शरीरं लसत्यस्याः ॥ ८ ॥

---

न्तरे । सूर्यास्येऽसिफले काण्डे शुण्डाग्रे खे जलेऽम्बुजे ॥' इति हैमः । 'कुञ्जरौ करिकुन्तलौ' इति रत्नमाला । 'कुम्भौ घटेभमूर्धांनौ' इति ॥ ७ ॥ मधुराधरा मधुरापत्तनभूमिरिति बाह्यार्थः । मधुरोऽधरो यस्याः सा पद्मावतीत्याकूतम् । मेघानां पङ्क्तिरिति वक्तुः, मे मम अघावली पापपङ्क्तिरिति श्रोतुरभिप्रायः । गन्धो लेशः । 'गन्धो गर्वे लवेऽपि च' इति । 'कादम्बिनी मेघमाला कादम्बवी च' इति जगद्धरः । 'ध्यष्टवर्षा भवेद्योषिन्मता जलधरावलिः' इति मध्वविजयटीकायाम् । **अतिरोहितेति** । तिरोहितकान्ति नेत्यतिरोहितकान्ति शरीरम् । अधरश्रीपक्षे तु अत्यन्तशोणकान्तिः । यथोचितं लिङ्गव्यत्ययः । समीचीनजघनसंपद् । गिरि वाचि । पक्षे–गिरिः पर्वतः । 'स्वादुप्रियौ च मधुरौ' इत्यमरः ॥ ८ ॥ 'पङ्क्तिः

सर्वाः स्त्रियो हसन्ति ।

श्रीनिवासः—कवे, पयोधरपालीं वर्णयेति भणामि ।

कहोडः—

चक्रो विरूपधारी नापि गुरुत्वं कदापि कलशस्य ।
तस्मादनुपमलीलो भात्येतस्याः पयोधराभोगः ॥ ९ ॥

श्रीनिवासः—नीरदावलिं वर्णय ।

कहोडः—

पूषा त्वेकः कोपयित्वा त्रिनेत्रं कालिङ्गश्चाप्यक्षगोष्ठ्यां द्वितीयः ।
दन्ताभावान्नीरदः कामपालात्तार्तीयीकं नैव जाने धरित्र्याम् ॥ १० ॥

कमलिनी—महाकवे, वार्धके सर्वो जनो नीरद इति कुतो न कथयसि ।

देवः—(सस्मितम् ।) सुकवे, जीमूतं वर्णयेति ममाशयः ।

कहोडः—(उच्चैर्हसन् ।) देव, तथा भण पुनः । मेघादिशब्दैर्वयं वञ्चिता द्व्यर्थैः ।

हंसानन्दमपाकरोति धरणौ कीर्तिं तनोति स्फुटं
सारङ्गं परिपाति नाशयति तत्कीनाशदुःखं सदा ।

---

पङ्क्तिप्रदेशयोः' इति । **चक्र इति** । चक्रः कोकः । विरहवाची । रूपं सौन्दर्यम् । सौन्दर्यधारी नेत्यर्थः । गुरुत्वं स्थूलत्वमिति दोषारोपप्रकारः । तस्मात्कोककलशयोरुपमानयोग्यताभावादित्यर्थः । 'रूपं स्वभावे सौन्दर्ये' इति । विरूपं पक्षिरूपम् । 'विः पक्षिपरमात्मनोः' इत्येकाक्षरः । कलशेत्यक्षरत्रयस्य मात्राद्वयात्मकत्वाभावाल्लघुत्वमेव न गुरुत्वमिति तत्त्वार्थः । आभोगः विशालता ॥ ९ ॥ नीरदो दन्तहीनः । पक्षे मेघः । अर्थः सुगमः ॥ १० ॥ **हंसानन्दमिति** । कृष्णपक्षे-हंसो दैत्यभेदः । एवमग्रेऽपि । 'कीर्तिः पङ्के यशस्यपि' इति । सारङ्गो

कामं वर्षति चागमान्कलयति प्रोज्जृम्भितान्संततं
जीयाद्यस्तु ददाति चामृतमपि श्रीकृष्णनीलाम्बुदः ॥११॥

सोमनाथः—देव, अहमेवं तर्कयामि ।

अपहसतश्चन्द्ररुचिं दधतः करकश्रियं च घनतां च ।
उचितं पयोधरत्वं राजन्सरसस्य मेघस्य ॥ १२ ॥

अस्मिन्व्यतिकरे वेलावेदकः पपाठ—

दैत्येन्द्रहृत्तटविपाटनपाटवाद्य-
कण्ठीरवास्यघनगर्जितदेशिकोऽयम् ।
क्ष्माभृद्गुहाप्रतिरवद्विगुणो वराहो
देवस्य जृम्भति मुहुर्जयशङ्खनादः ॥ १३ ॥

इति श्रुत्वा वृषभाकारं दैत्यं निहत्य प्रतिनिवृत्तेन भगवता क्रोडेन भवितव्यमिति सर्वाननुज्ञाप्य स्वयमपि तत्स्थानमगमत् ॥

इति श्रीनिवासविलासाख्यचम्प्वां उत्तरविलासे चतुर्थं उल्लासः ॥ ४ ॥

---

गजेन्द्रः । पक्षे चातकः । 'श्रुतान्ते पुंसि कीनाशः क्षुद्रकर्षकयोरपि' इत्यमरः । आगमाः शास्त्राणि । पक्षे–वृक्षाः। अमृतं मोक्षम् । पक्षे—जलम् । 'अमृतं यज्ञशेषे स्यात्पीयूषे सलिले घृते । अयाचिते च मोक्षे च' इति सुधा ॥ ११ ॥ **अपहसत इति** । चन्द्रकान्ते वर्षाकाले दौर्बल्यमिति कविसंप्रदायः । 'रविचन्द्रावपि नोपलक्षितौ' इति घटकर्परे । कर एव करकः वर्षोपलः । 'करो वर्षोपले' इति । सरो जलम् मेघपक्षे । स्तनपक्षे तु–स्वर्णकान्तिः घटः । घनतां काठिन्यम् । शृङ्गाररसः ॥ १२ ॥ **दैत्येन्द्रेति** । कण्ठीरवास्यः सिंहः । देशिकः गुरुः ॥१३॥
इति श्रीनिवासविलासचम्पूटीकायामुत्तरविलासे चतुर्थं उल्लासः ॥

पञ्चमोल्लासः ।

अथ कदाचित्प्रभातसमये वेत्रपाणिर्व्यजिज्ञपत्—

'घनतिमिरहारिसंपज्जयति हि कृष्णप्रबोधरुचिरश्रीः ।
सर्वत्र शरद्गमने सूर्यो देवर्षिरपि गृहद्वारि ॥ १ ॥'

श्रीनिवासः—(ससंभ्रमानन्दादरमुत्थाय संमान्य भगवन्तं नारदमास्थानमण्डपं प्रवेश्य ।) 'महर्षेः कुत आगमनम्' इत्याह ।

सोऽप्यवदत्—'भवद्दर्शनार्थं विरञ्चिलोकात् ।'

श्रीनिवासः—अनुगृहीतोऽस्मीति ।

नारदः—

कीर्तिः सोडुपसंततिर्हि तरणिः श्रेणी प्रतापश्च ते
साचिव्यं गुणसिन्धुपारगमने कुर्यादिति श्रद्धया ।
दृष्टे मय्यचलादिमातदितरा दृष्टान्यरोधाभव-
त्कुर्वे किं नु तथा विरुद्धगुणयोः श्रीश्रीनिवासप्रभो ॥२॥

---

**अथ कदाचिदिति** । **घनेति** । घनो मेघस्तत्संबन्धि तिमिरं मालिन्यमिति शरत्पक्षे । घनमविरलं यत्तिमिरमन्धकार इति सूर्यपक्षे । नारदपक्षे–तिमिरमज्ञानम् । कृष्णस्य प्रबोधो निद्रात्यागः । शरदीति शाब्दं पक्षद्वयेऽपि । कृष्णेति संबोधनम् । प्रबोधो निद्रात्यागः । जनानामिति शेषः । पक्षे–प्रकृष्टज्ञानम् ॥१॥ **कीर्तिरिति** । उडुपसंततिः प्लवपरम्परा । प्रतापः । तरणिश्रेणी नौकापङ्क्तिः । सिन्धुपारगमने विषये साचिव्यं सहायं कुर्यादिति श्रद्धया विश्वासेन मयि दृष्टे सति । द्वयोरपि सिन्धुतरणसाधनत्वादिति भावः । ततः किमित्यत आह—**अचलेति** । अचला चलनरहिता । अदृष्टापरतीरा । द्वयमप्यप्रयोजकमिति भावः । विरुद्धगुणयोः सतोरिति सिन्धुपक्षे । गुणपक्षे तु–उडुपश्चन्द्रः । तरणिः सूर्यः । गुणाः सौमनस्यादयः । अचला स्थिरा । अन्यै रोधः निरोधः । पश्चाद्बहुव्रीहिः । निरर्गलप्रवाहेत्यर्थः । एका धवला, एका शोणेति, शीतला, उष्णेति च विरुद्धगुणत्वं ज्ञेयम् । कीर्तिप्रतापयोर्धवलत्वादिगुणाः । कल्पलताः प्रसिद्धाः । 'उडुपं तु प्लवः कोलः' इत्यमरः । 'नौस्तरणिस्तरिः' इति च । 'रोधः प्रोक्तश्च रोधसी' इति च ।

श्रीनिवासः—अहो महत्त्वारोपप्रकारः । भवतु । भगवतः शतानन्दस्य सभायां कीदृशी प्रवृत्तिः ।

नारदः—

प्रणमत्ययं सभार्यः सनकः पुरतः सनन्दनश्चेति ।
कथयति वेत्रकरौघे सामि स्मितमातनोति परमेष्ठी ॥ ३ ॥

किंच ।

इयं नवरसोल्लासवाणी चित्तं धिनोति नः ।
इति काव्यस्तवव्याजाद्भार्यां स्तौति चतुर्मुखः ॥ ४ ॥

श्रीनिवासः—महर्षे, सर्वतः श्लाघ्या ते भारती। अपि नाम कथय वियन्नृपालराजधानीवृत्तान्तं किमप्यभिनवम् ।

नारदः—देवलोकं गतवत्याकाशभूपाले तदवरजस्तोण्डिमानस्तत्पुत्रः कुमारश्च राज्यार्थं योद्धुमिच्छतः । तस्मादहमेतेन वृत्तान्तेन देवं योजयित्वा युद्धदर्शनार्थं सत्वरं गमिष्यामीत्यागतवान् ।

श्रीनिवासोऽनतिहर्षं देवर्षिमनुज्ञाप्य यावन्नारायणपुरं गन्तुमिच्छति तावदेव युगपत्तोण्डिमाननृपालः कुमारश्चागत्य यथाविधि पूजितौ श्रीनिवासमूचतुः—'कृतसाहाय्येन देवेन भवितव्यम्' इति ।

---

॥ २ ॥ **प्रणमतीति** । सनको ब्रह्मपुत्रः । तस्य योगिनः भार्यापुत्रसहितत्वं स्मितहेतुः । सामीत्यर्धे । इति चमत्कारः । तथा—सभायामार्यः । सनन्दन इति सनकभ्रातेति ॥ ३ ॥ **इयमिति** । नवरसाः शृङ्गारादयः । वाणी वाक् । धिनोति तोषयति इति काव्यस्तवप्रकारः । पक्षे—नवरसः अभिनवप्रेम । वाग्दे-

तच्छ्रुत्वा श्रीनिवासस्तोण्डिमानं प्राह—

सुतोऽग्रजस्येति जगन्निवासः पार्थस्य सेवामुररीचकार ।
भीष्मः परित्यज्य वसुंधराशां वैचित्रवीर्यं नृपमाततान ॥ ५ ॥

(कुमारं प्रति ।)

युधिष्ठिरः किं न विदां वरिष्ठो न तत्पितृव्ये धृतराष्ट्रतासीत् ।
धरासुतस्यापि धरापतित्वे कथं मनीषा प्रसरत्यये ते ॥ ६ ॥

(उभौ प्रति ।)

येषां मनीषास्ति धरान्वितत्वे तेषां न गोत्रान्वितत्तेति चित्रम् ।
ज्याकर्षणं ये बहु मानयन्ति कीनाशलोके गणनैव तेषाम् ॥ ७ ॥

वस्वीशतैकस्य मतीशतेयमन्यस्य चेत्तर्हि समो विभागः ।
द्वयोर्विवादे सति चैवमेव बुधैर्विभज्या वसुमत्यमेया ॥ ८ ॥

---

वीति भार्यास्ववनिर्वाहः ॥ ४ ॥ **सुत इति** । अग्रजस्येन्द्रस्य । स्वस्योपेन्द्रत्वात् । जगन्निवासो वासुदेवः । पार्थस्यार्जुनस्य । सेवां सूतत्वरूपाम् । उररीचकार अङ्गीचकार । वैचित्रवीर्यं पाण्डुम्, धृतराष्ट्रं वा । त्वमपि भ्रात्रेयं राजानं कुर्विति भावः ॥ ५ ॥ **युधिष्ठिर इति** । धृतराष्ट्रता भूपत्वमिति चमत्कारः । त्वमपि पितृव्यस्य राज्यत्वमङ्गीकुर्विति भावः । तन्नामकत्वमिति तत्त्वार्थः । धरा आकाशराजपत्नी । भूमिश्चेति परिहारः । विरोधस्तु स्पष्टः ॥ ६ ॥ **येषामिति** । धरागोत्रयोरपि भूम्यर्थकत्वाच्चित्रत्वम् । तत्त्वार्थस्तु—गोत्रं कुलम् । ज्या भूमिः । कीनाशः कर्षक इति च । मौर्वी, यमः, इति तत्त्वार्थः । युद्धेनार्थो नास्तीति भावः ॥ ७ ॥ **वस्वीशतेति** । वसुमतीत्यक्षरचतुष्टये एकस्य वस्वित्यक्षरद्वयम् । अन्यस्य मतीत्यक्षरद्वयमिति चेत्समो विभाग इत्येकोऽर्थः । वसु धनम् । मतिर्बुद्धिरित्यपरः । द्वयोरपि यदि धनाशा, बुद्ध्यभावश्च तर्हि येनकेनचित्समेऽपि कृते विभागे विभागं विषमं जानतो न विरमतश्च कलहात् । अतो विभागकरणपक्षोऽपि नोचित इति भावः । अत्र वसु पृथ्वी ग्राह्या । तस्या अपि धने-

इति । ततश्च तावुभावपि दुराग्रहग्रस्तौ—

अयं कुमारः स च शक्तियुक्तो राज्ञः सुतोऽयं स बुधत्वमेति ।
अयं तपस्वी स च धर्मविद्याविचक्षणो द्वावपि मे समानौ ॥ ९ ॥

इति । पद्मावत्योक्तश्लोकाभिप्रायं च विदित्वा पुनः प्राह—'यद्यस्मात्खेदयितुं युवयोः समीकमेव हितं भवति तर्हि ।

अहं चैकतश्चक्रमेकत्र बुद्ध्वा इदानीमपि स्यात्तथैव व्यवस्था ।
नरः कौरवश्चापतुर्हर्षमुच्चैर्यथेच्छं स गृह्णातु भागं स्वकीयम् ॥१०॥'

इत्येवमुक्तवति देवे

गृह्णंश्चक्रं तोण्डिमानो नृपालः प्राप स्थानं स्वं तथा हृष्टरूपः ।
तद्वद्देवं राजहंसं मुदाढ्यः स्वीकृत्यागात्स्वां पुरीं राजपुत्रः ॥ ११ ॥

ततश्च ।

हस्त्यश्वपत्तिरथघोषविमिश्रभेरी-
भाङ्कारपूरितदिशावलयान्तराला ।

---

ष्वेकत्वात् ॥ ८ ॥ **अयमिति** । कुमारः स्कन्दः । पक्षे—बालः । शक्तिः स्कन्दायुधम् । पक्षे—सामर्थ्यम् । 'कासूसामर्थ्ययोः शक्तिः' इत्यमरः । राज्ञश्चन्द्रस्य । पक्षे—भूपस्य । बुधो ग्रहभेदः । पक्षे—विद्वान् । तपस्वी तपोनिष्ठः । पक्षे—अनुकम्प्यः । धर्म आचारः । पक्षे—धनुः । बालः राजपुत्रः । पक्षे—दीनः । त्वया परिपालनीय इति भावः । 'तपस्वी तापसे चानुकम्प्ये' इति । 'धर्मोऽस्त्री पुण्यआचारे स्वभावोपमयोः क्रतौ । अहिंसोपनिषन्न्याये ना धनुर्यमसोमपे ॥' इति सुधा ॥ ९ ॥ **अहमिति** । चक्रं सैन्यम् । आयुधं च ॥ १० ॥ **गृह्णन्निति** । चक्रं कोकम् । सुदर्शनं च । राजहंसं पक्षिणम् । भूपश्रेष्ठं च ॥ ११ ॥ **हस्त्यश्वेति** । भांकारः अनुकरणशब्दः । 'भेरीभांकृतिभिस्तुरङ्गनिनदैः' इति

स्वैः स्वैः परं परिवृढैः परिपाल्यमाना
सेनाद्वयी समरभूमिमुपाजगाम ॥ १२ ॥

तदा कुमारोऽपि भुजावलेपान्मौर्वीसनाथीकृतचापदण्डः ।
किरञ्छरान्सर्पसमानरीणां बभूव भीष्मोऽपि विचित्रवीर्यः ॥ १३ ॥

शुभ्राश्वयुक्स्यन्दनभृत्किरीटी मनोरथाग्रार्पितकंसशत्रुः ।
हरिध्वजः प्राप स तोण्डिमानो रणक्ष्मां सारितपार्थचर्यः ॥ १४ ॥

संमर्दे सति गगने सुराङ्गनानामुत्तुङ्गस्थलमनवेक्ष्य नारदोऽयम् ।
वीरौघाप्रतिमपराक्रमं दिदृक्षुः स्वर्योषागुरुकुचमारुरुक्षुरासीत् ॥ १५ ॥

अथ तस्मिन्व्यतिकरे कश्चिद्वेत्रपाणिस्तोण्डिमानभूपालमवदत्—

वीरावेतावाजिरङ्गावतीर्णौ कृत्वा युद्धं विग्रहत्यागकामौ ।
एकः शत्रोः खड्गपातादथाग्रे योधाभावादन्य इत्येष भेदः ॥ १६ ॥

रिपोः शराघातविभिन्नमूर्धा दन्तावलोऽयं विलुठन्पृथिव्याम् ।
गुरुप्रहारोन्मथितस्य तस्य क्रौञ्चस्य लीलां वहतीति मन्ये ॥ १७ ॥

न केवलं वर्णत एव राजन्वशाधवो नीरदभावमाप ।
किं तु प्रभो वैरिभुजप्रमुक्तमहागदाभग्नरदत्वतश्च ॥ १८ ॥

---

प्राचीनप्रयोगः ॥ १२ ॥ **तदेति ।** भीष्मः देवव्रतः । विचित्रवीर्यः राजभेदः । इति नामतो विरोधः । क्रूरः अद्भुतपराक्रमः ॥ १३ ॥ **शुभ्राश्वयुगिति ।** शुभ्रा उद्दीप्ताः । इति तोण्डिमानपक्षे । पार्थपक्षे—धवलाः । 'शुभ्रमुद्दीप्तशुक्लयोः' इत्यमरः । हरिः सिंहः कपिश्च । रणक्ष्मां रणभूमिम् ॥ १४ ॥ अन्यत्सुगमम् ॥ १५ ॥ व्यतिकरः प्रकारः । **वीरावेताविति ।** 'विग्रहः समराङ्गयोः' इति धरणिः । अग्रे सन्मुखप्रतिवीराभावात् ॥ १६ ॥ १७ ॥ **न केवलमिति ।** वशाधवः गजः । नीरदो मेघः । दन्तहीनश्च ॥ १८ ॥

अहह ।

सेनापतिः संयति लब्धलक्ष्यो जित्वारियूथं सहसा प्रभग्नः ।
पलायमानो यदसौ विचित्रं सेनाविहीनोऽप्यभवच्चमूढः ॥ १९ ॥

इत्येवमुक्त्वा संवृतवचसि तस्मिन्सेनापतिभङ्गश्रवणकोपेन कलितता-पेन तोण्डिमानभूपेन

प्राकाशि चक्रं यदनेकधारं ज्वलज्ज्वलच्छ्रीमदनेकधारम् ।
कर्तुं ययौ सर्वविपक्षपातं तत्तोण्डिमाने कृतपक्षपातम् ॥ २० ॥
अनन्यधार्यं प्रसमीक्ष्य चक्रं तत्तापितं चापि कुमार चक्रम् ।
सुदर्शनं घोरतरं स देवो बभार वेगात्किल वासुदेवः ॥ २१ ॥

ततश्च ।

निजायुधप्रतापेन जगाम वसुधां हरिः ।
युक्तस्वभक्तरागाढ्यो बभारापि च मूर्च्छनाम् ॥ २२ ॥

तस्मिन्व्यतिकरे युद्धोत्सवदर्शनभङ्गदुःखमस्माकं दैववशात्प्राप्तमिति अभिनयति खेदमुद्रां भगवति नारदे हाहेति क्रन्दत्सु नारायणपुरनिवासिजनेषु सपरिवृढा सेनायुगुली वीतरणव्यापारदुराग्रहा तथाविधस्य श्रीनिवासस्य चरणमूलमुपागमत् ।

---

**सेनापतिरिति** । चम्वा ऊढः । पक्षे—चेति भिन्नं पदम् । मूढः ॥१९॥ **प्राकाशीति** । धाराः अराणि । **अनेकधेति** । अरमिति च्छेदः अलमित्यर्थकः । विपक्षाणां पक्षपातम् ॥२०॥२१॥ **निजेति** । रागः भैरवादिः । 'सप्तस्वरसमाहारो मूर्च्छना परिकीर्तिता' इति । युक्तताप्रकारः । तत्त्वार्थस्तु स्फुटः ॥२२॥

वाहिन्येकैव गङ्गाख्या पादे तस्येति विश्रुता ।
इदानीं वाहिनीद्वन्द्वमिति चित्रीयते मनः ॥ २३ ॥

अथ विविधप्रयत्नेन प्राप्तप्रबोधः पौरवृद्धैः सह संमन्त्र्य समं विभज्य तद्दायम् । तोण्डिमानकुमारौ तोषयन्प्राप्तराज्यौ द्वावप्यापृच्छ्य पद्मावत्या सह भोगीन्द्राचलं प्रत्युदचलच्छ्रीनिवासः ।

कण्ठे कण्ठीरवाख्यां प्रतिफलमधुरां बिभ्रतः सूरिचूडा-
रत्नस्यान्ते वसन्यः कलयति कवितां गद्यपद्यावबद्धाम् ।
तस्य श्रीश्रीनिवासप्रभुवररचिते वेङ्कटेशस्य काव्ये
पर्याप्तः श्लेषसारे कविमशकशिशोः पञ्चमोऽयं विलासः ॥२४॥

इति श्रीमन्निखिलश्लिष्टकाव्यरचनाधौरेयकविचूडामण्डितमुकुटललामावलीनीराजितचरणयुगलश्रीमद्वेङ्कटाध्वरिविरचितायां श्रीनिवासविलासाभिधाशालिन्यां चम्प्वां उत्तरविलासे पञ्चमोऽयमुल्लासः ॥ ५ ॥

---

**वाहिनीति** । तरङ्गिणी सेना च ॥ २३ ॥ दायं पित्रार्जितं द्रव्यम् । **कण्ठ इति** । कण्ठे कण्ठीरवो नृसिंहः ॥ २४ ॥

इति श्रीधरणीधरविरचितायां श्रीनिवासचम्पूटीकायामुत्तरविलासे पञ्चम उल्लासः ॥

